ISSN :- 0974 - 8946

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

(A REFEREED QUARTERLY RESEARCH JOURNAL)

४१ वर्षे प्रथमोऽङ्कः (जनवरीमासाङ्कः) २०१६ ई०

प्रधानसम्पादकः

**प्रो० रमेशकुमारपाण्डेयः**

कुलपतिः

सम्पादकः

**प्रो० हरेरामत्रिपाठी**

सहसम्पादकः

**डॉ० ज्ञानधरपाठकः**




प्रकाशन-स्थलम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

(मानितविश्वविद्यालयः)

नवदेहली-११००१६

प्रकाशकः
**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**
(मानित-विश्वविद्यालयः)
कुतुब इन्स्टीट्यूशनल एरिया, नवदेहली-११००१६



ISSN :- 0974 - 8946

४१ वर्षे प्रथमोऽङ्कः (जनवरीमासाङ्कः) २०१६ ई०



मुद्रकः : **अमरप्रिंटिंगप्रैसः**, दिल्ली

# शोध-प्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य
## अनुसन्धान-प्रकाशन-विभागीया पत्रिका

१. एषा त्रैमासिकी शोध-पत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनुसन्धेयविषयाणां प्रकाशनं च विद्यते।

४. अस्यां श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।

५. अप्रकाशितानां दुर्लभानां प्राचीनाचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीकाटिप्पण्यादिपुरस्सरं प्रकाशनमप्यस्यां क्रियते।

६. प्रकाशित-निबन्धः पत्रिकायाः एक प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

७. अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते।

८. अस्याः वार्षिकसदस्यताराशिः १५०.०० रु० (पञ्चाशदुत्तरैकशतं रूप्यकाणि) सदस्यताराशिः **कुलसचिव, श्रीलालबहादुरशास्त्री-राष्ट्रिय-संस्कृत-विद्यापीठ,** नई दिल्ली-१६, इति सङ्केतेन (बैंकड्राफ्ट अथवा मनीआर्डर) द्वारा प्रेषणीयः।

९. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः 'सम्पादकः' 'शोध-प्रभा', श्रीलालबहादुरशास्त्री राष्ट्रियसंस्कृतविद्यापीठ, कटवारिया सराय, नई दिल्ली-११००१६ इति सङ्केतेन विधेयः।

**सम्पादकः**

# नैवेद्यम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य शोधप्रभाख्या शोधपत्रिका विविधविषयगवेषणपूर्णानां निबन्धानां संग्रहं क्रोडीकृत्य विद्योततेतराम्। अनुसन्धानसरणिसम्पन्नानामाचार्याणां शोधार्थिनाञ्च शोधपूर्ण-निबन्धान् कलेवरीकृत्य संस्कृतवाङ्मयपरिपोषणे निमग्नेयम् आनन्दसागरे निमज्जयति विदुषो नितान्तम्।

नूतनतथ्याविर्भावात्मकस्य शोधस्य विषयज्ञानन्तु प्रमात्मकं भवति तत्र यानि कारणानि भवन्ति तानि प्रमाणपदवाच्यानि भवन्ति। प्रमाकरणं प्रमाणं वा प्रमा प्रमाणमिति। प्रमाणस्य भावः प्रामाण्यमिति व्युत्पत्त्यनुसारेण प्रमाणशब्दात् भावार्थके ष्यञ् प्रत्यये कृते सति प्रामाण्यशब्दो निष्पद्यते। प्रमा तु तद्वति तत्प्रकारकत्वरूपप्रकर्षविशिष्टं ज्ञानमिति। प्रामाण्यं नाम प्रमात्वं, प्रमाकरणत्वं वा। तत्र ज्ञानप्रामाण्यस्य स्वतस्त्वपरतस्त्वविचारं वयं कुर्मः। ज्ञानप्रामाण्यमप्रामाण्यञ्च स्वत एव गृह्यते उत्पद्यते चेति सांख्यवादिनः वदन्ति। सर्वं हि कार्यं स्वकारणाधीनोत्पत्तिकं सत् स्वकारणगुणदोषाभ्यामेव शुद्धमशुद्धं वा भवति, तस्मात् कारणाधीनयोर्गुणदोषयोरवधारणादेव ज्ञानस्य प्रामाण्याप्रामाण्ये अवधारणीये इति परतः एव ज्ञानप्रामाण्याप्रामाण्यद्वयमिति नैयायिकाः वदन्ति। ज्ञानानां स्वाभाविकमप्रामाण्यं परापेक्षञ्च प्रामाण्यमिति केषाञ्चन बौद्धैकदेशिनः वदन्ति। मीमांसकास्तु स्वत एव ज्ञानप्रामाण्यमिति स्वीकुर्वन्ति। ते वदन्ति ज्ञानप्रामाण्यं स्वतोऽसत् स्यात्, नहि गुणसहस्रेणापि तत् सत् कर्तुं शक्यते। न हि गुणज्ञानाद् संवाददर्शनात् वा पूर्वं ज्ञानं न जायते। तस्मात् प्रामाण्यं स्वत एव भवति। ज्ञानप्रामाण्यन्तु दोषकृतं परत एव भवति। शाब्दस्थले सर्वथा परतः ज्ञानप्रामाण्यस्य निश्चयो भवति इति जैनाः वदन्ति। अत एवोच्यते–

**प्रमाणत्वाप्रमाणत्वे स्वतः सांख्याः समाश्रिताः।**
**नैयायिकास्ते परतः सौगताश्चरमं स्वतः॥**
**प्रथमं परतः प्राहुः प्रामाण्यं वेदवादिनः।**
**प्रमाणत्वं स्वतः प्राहुः परतश्चाप्रमाणताम्॥** इति

अत एव तत्त्वचिन्तामणिकारेण विप्रतिपत्तिरुच्यते–

**ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यं न वेति** अत्र विधिकोटिः मीमांसकानां निषेधकोटिर्नैयायिकानामिति। पक्षविपक्षयोर्मध्ये संवादेन **वादे वादे जायते तत्त्वबोधः** इति नियमादनुसन्धानस्योद्गमो भवति तदेवास्माकमुद्देश्यं विद्यत इति।

शोधप्रभायाः अस्मिन्नङ्के विविधविषयविश्लेषणपरा चतुर्दश लेखाः प्रकाश्यन्ते। एवं प्रतिभा-विशेषोद्भासितशोधपूर्णा संस्कृतसौरभं वितन्वतीयं विदुषां सन्तोषाय भविष्यतीति कामयमानोऽहं प्रमादादज्ञानाद्वा सञ्जातस्य दोषजातस्य प्रशमनार्थं निर्देशादिप्रदानैश्च उत्साहश्रियः संवर्धनार्थमभ्यर्थये सुमनसः विदुषः।

**प्रो. रमेशकुमारपाण्डेयः**
कुलपतिः

# सम्पादकीयम्

कस्यापि कार्यस्य सिद्धिः कश्मिंश्चिद् काले भवति। तच्च कार्यं लौकिकं वैदिकं ज्ञानात्मकं वा भवेत्। ज्ञानात्मकं कार्यमप्यनेकविधं भवति तत्रानुसन्धानात्मकस्य कार्यस्य वैशिष्ट्यन्तु भवत्येव। तच्च कार्यमपि कस्मिंश्चित् काले एव भवति। स च कालः कः इति जिज्ञासा जायते। अत्र केचन वदन्ति कालेन जगतः सर्वप्राणिनो विषयाश्च नियन्त्रिताः भवन्ति। काल एव मानवं कस्मिंश्चिद् विषये कार्ये वा प्रवर्तयति। कालकल्पनां विना सूर्यचन्द्रयोः सीम्नः कर्मणश्च विभागो न भवितुमर्हति। नापि च सम्भाव्यते कस्यापि पदार्थस्य व्यवस्था प्रबन्धश्च। वाक्यपदीयकारेण भर्तृहरिणा कालशक्तेः स्वातन्त्र्यं स्वीक्रियते। समग्राः कारणशक्तयः कालाधीनाः सन्ति। कार्यस्य भावस्य षड्विकाराः भवन्ति ते सर्वे कालमाश्रित्यैव प्रवर्तन्ते। अत एव कालस्यैव चर्चामिदानीं वयं कूर्मः। चार्वाकदर्शने कालस्यातिरिक्तं स्वरूपं नोपलभ्यते। बौद्धदर्शनस्य चत्वारः सम्प्रदायाः सन्ति वैभाषिकसौत्रान्तिक-माध्यमिक-योगाचारश्चेति। सौत्रान्तिकास्तु वर्तमानकालमेव वस्तुसदिति मन्वते। माध्यमिकः शून्यवादी, तन्मते च सर्वमसदिति। सर्वास्तिवादी वैभाषिकः 'यद्यस्ति सर्वकालास्तित्वात्' इत्यनेन अतीतानागतप्रत्युत्पन्नानां त्रयाणां कालानां सत्ताम्मनुते। सौत्रान्तिकास्तु प्रत्युत्पन्नमात्रं वस्तुसन् मन्यन्ते। चन्द्रकीर्तिः वदति भगवता स्वयमतीतानागतप्रत्युत्पन्नेति कालास्त्रयः समुपदिष्टाः। वैशेषिकमते पृथिव्यादिनवद्रव्येष्वन्यतमं द्रव्यं कालो वर्तते। अत एव केशवमिश्रोऽपि वदति कालोऽपि दिग्विपरीतपरत्वापरत्वानुमेयः संख्या-परिमाणपृथक्त्वसंयोगविभागवान् एको नित्यो विभुश्च। विश्वनाथो वदति 'जन्यानां जनकः कालो जगतामाश्रयो मतः।' रघुनाथशिरोमणिः वदति दिग्कालौ ईश्वरान्नातिरिक्तौ स्तः। कार्यत्वावच्छिन्नं प्रति निमित्तकारणं कालो भवति। कपिलः दिक्कालयोरन्तर्भावमाकाशे करोति। वाक्यपदीये भर्तृहरिणा उक्तम्–

**अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः।**
**जन्मादयो विकाराः षड् भावभेदस्य योनयः॥**

स एष पूर्वेषामपि गुरुः कालेनाऽनवच्छेदादिति सूत्रेण पतञ्जलिना कालस्य सङ्केतो व्यधायि। अद्वैतवेदान्तिनस्तु वदन्ति।

**दिवाकरपरिस्पन्दपिण्डसङ्गतिसम्भवात्।**
**व्यायिनश्चेतनादेव कथं कालः प्रसिद्ध्यति॥**

कश्चन वदति–

**लोकानामन्तकृतः कालः कालोऽन्यः कलनात्मकः।**
**स द्विधा स्थूलसूक्ष्मत्वान्मूर्त्तश्चामूर्त्त उच्यते॥**

भगवती श्रुतिरपि वदति–

द्वे वाव ब्रह्मणो रूपे कालश्चाकालश्चाथ यः ..........ऽकालोऽकालोऽकालोऽथ य आदित्याद्यः सकालः सकलः तस्मात् संवत्सरो वै प्रजापतिः। अत एव श्रीमद्भागवते उक्तम्–

**संवत्सरः परिवत्सरः इडावत्सर एव च।**
**अनुसत्सरो वत्सरश्च विदुरेवं प्रभाष्यते॥**

आध्यात्मिकाधिभौतिकाधिदैविकभेदेन त्रैविध्यं कालस्य निरूपितं भागवते इति।

स च कालः जगदाधारत्वादनुसन्धानस्य चतुर्दशशोधलेखानामाधारो विद्यत इति। वेदपुराणसाहित्यदर्शनज्योतिषां वैशिष्ट्यमङ्कोऽयं निरूपयति। विविधविद्यालङ्कृतैः विद्वद्भिः निरूपिताः एते शोधलेखाः संस्कृतज्ञानामन्तेवासिनां विदुषाञ्च कृते परमोपकारकाः भवेयुरिति हनुमन्तं प्रणम्य विरमामि।

**प्रो. हरेरामत्रिपाठी**
शोधप्रकाशनविभागाध्यक्षः

# विषयानुक्रमणिका

**संस्कृतविभागः**



**हिन्दी विभाग**



## English Section

# पुराणेषु कुम्भस्थलवर्णनम्

**डॉ. सुन्दरनारायणझाः**

विदन्त्येव भवन्तस्सर्वे यद्देवाश्चासुराश्चोभये प्राजापत्याः। पुरा कदाचिन्महर्षेर्दुर्वाससः शापादखिललोकलक्ष्मीरन्तर्हिताऽभवत्। यस्मात्कारणाद्ब्रह्मादयो देवाः, गन्धर्वयक्षकिन्नरदैत्यदानव-नागमनुष्यराक्षसपशुपक्षिकीटादयः समस्तचराचरप्राणिणो मन्दभाग्यास्सन्तो दुःखसागरे निमग्नाः सञ्जाताः। दुःखनिर्वृत्तये समुचितमार्गमन्वेष्टुं ते सर्वे ब्रह्मलोकं गतवन्तः। ब्रह्मणानुज्ञातास्ते सर्वे क्षीरसागरशायिनं सर्वजगन्निवासं भगवन्तं विष्णुमाराधयामासुः। तेषां प्रार्थनामाकर्ण्य प्रसन्नो भगवानखिललोकनायको विष्णुस्तान् सम्भूय सविधिसत्रयागात्मकक्षीरोदधिमन्थनार्थमादिदेश। भगवतः कल्याणकारकं वचनं श्रुत्वा सर्वेऽप्यदितिदितिसुताः सकलमनोरथसिद्धये सत्रयागानुष्ठानरूपपयोदधिमन्थनाय प्रवृत्ताः बभूवुः। सागरमन्थनाच्चतुर्दशरत्नानि (चन्द्र-कामधेनु-कौस्तुभ-शङ्ख-ऐरावत-उच्चैःश्रवा-रम्भा-वारुणी-शार्ङ्ग-पारिजात-तुलसी-लक्ष्मी-कालकूट-कुम्भसंज्ञकानि) तैः समवाप्तानि। तत्रेदमपि प्रसिद्धमेव यत्क्षीरोदधिमन्थनादमृतकलशहस्तः समुद्भूतो भगवान् धन्वन्तरिः। धन्वन्तरिहस्तादमृतकलशमादायासुराः तत्पानाय समुद्यता अभूवन् । यथोक्तं श्रीमद्भागवते-

**अथोदधेर्मथ्यमानात्काश्यपैरमृतार्थिभिः ।**
**उदतिष्ठन्महाराज पुरुषाः परमाद्भुतः।।**

**दीर्घपीवरदोर्दण्डः कम्बुग्रीवोऽरुणेक्षणः।**
**श्यामलस्तरुणः स्रग्वी सर्वाभरणभूषितः।।**

**पीतवासा महोरस्कः सुमृष्टमणिकुण्डलः।**
**स्निग्धकुञ्चितकेशान्तः सुभगः सिंहविक्रमः।।**

**अमृतापूर्णकलशं बिभ्रद्वलयभूषितः।**
**स वै भगवतः साक्षाद्विष्णोरंशांशसम्भवः।।**

**धन्वन्तरिरिति ख्यात आयुर्वेददृगिज्यभाक्।**
**तमालोक्यासुराः सर्वे कलशं चामृताभृतम्।।**

**लिप्सन्तः सर्ववस्तूनि कलशं तरसाऽहरन्।**
**नीयमानेऽसुरैस्तस्मिन्कलशेऽमृतभाजने ।।**

**विषण्णमनसो देवा हरिं शरणमाययुः।**
**इति तद्दैन्यमालोक्य भगवान्भृत्यकामकृत्॥**
**मा खिद्यत मिथोऽर्थं वै साधयिष्ये स्वमायया।**[1]

तदा सर्वोपायविदीश्वरो भगवान् विष्णुर्विविधालङ्कारभूषिताखिललोकाकर्षणकारिणी नवयौवना स्त्रीव मायायोषिद्वपुर्दैत्ययूथपचेतःसु काममुद्दीपयन् प्रादुर्बभूव। तामालोक्यासुराः कामार्त्तहृदया महदाश्चर्यमिति मन्यमानाः कासि? कुतः समायाता? चेत्यादि पप्रच्छुः। तदानीं श्रीभगवानुवाच-

**कथं कश्यपदायादाः पुंश्चल्याम्मयि सङ्गताः।**
**विश्वासं पण्डितो जातु कामिनीषु न याति हि॥**

**सालावृकाणां स्त्रीणां च स्वैरिणीनां सुरद्विषः।**
**सख्यान्याहुरनित्यानि नूत्नं नूत्नं विचिन्वताम्॥**[2]

सर्वजगन्मोहिन्याः वचः श्रुत्वा आश्वस्तमनसो दैत्यास्तदानीं स्वात्मानममृतभाजनं मत्वा हृष्टा बभूवुः। तदनन्तरं दैत्या आदित्याश्च नित्यकर्माणि समनुष्ठायामृतपानार्थं शालायामागत्य प्राङ्मुखाः मन्थनस्थानात् हिमवद्वनपर्यन्तं पङ्क्तिबद्धाः देवास्तदुत्तरे चासुराः प्रागग्रेषु कुशेषूपविष्टवन्तः। नवयोषिद्रूपधृतो हरिः प्रथमं देवानमृतं पाययामास। तस्मिन्नेवामृतपानकाले स्वल्पममृतम्मत्वा राहुर्देवसंसदि प्रविश्य छद्मनाऽमृतमपिबदिति चन्द्रार्काभ्यां च विष्णुः सूचित इति। तदानीं श्रीहरिः सुदर्शननाम्ना स्वचक्रेणामृतं पिबतः राहोः शिरश्चिच्छेद। राहोः कबन्धः सहसोत्थाय मोहिनीरूपधृतं भगवन्तं विष्णुं दधाव। देवा इदानीममृतं पीतवन्त इति मत्वा विष्णुः मोहिन्यात्मकं मायादेहं परित्यज्य स्वं रूपं धृत्वा चासुराणां सम्मुखमुपस्थितोऽभवत्। तदुक्तं श्रीमद्भागवते-

**पीतप्रायेऽमृते देवैर्भगवांल्लोकभावनः।**
**पश्यतामसुरेन्द्राणां स्वं रूपं जगृहे हरिः॥**[3]

अथैतदवलोक्यासुराः क्रुद्धाः सन्तो विवादमकुर्वन्। देवासुरयोर्मध्ये पूर्वमपि वैरभाव आसीत्तदधुना किञ्चिद्वृद्धिमगात्। देवासुरयोर्मध्ये घोरसङ्ग्रामोऽभवत्। तदानीमेव सहसा विष्णुः वामहस्ते कुम्भं दक्षिणहस्ते च चमसमादाय विनतानन्दने गरुडे समारुह्य कलशं तत्रैव जाह्नवीजले प्रक्षिप्तवान्। चमसस्थितञ्चामृतमन्यस्थलेषु ऋषीणां पितृणां मुनीनां देहिनाञ्च सुधापानार्थं निपपात। यस्मिन् मुहूर्त्ते यत्र-यत्र मन्थनोत्थितममृतं विष्णुना निषिञ्चितं तस्मिन् तस्मिन् मुहूर्त्ते तत्र-तत्र तीर्थेऽस्मिन् धरातले कुम्भयोगो भवतीति सर्वेऽपि सुधियो निश्चिन्वन्ति। विषयेऽस्मिन् विस्तृतं विवरणं तन्त्रग्रन्थेषूपलभ्यते। पुराणेषु केवलं सागरमन्थनाभिधाऽऽख्यायिकैव विशिष्टा। अतोऽधुना तन्त्रशास्त्रमनुसृत्य कुम्भयोगविषये

1. श्रीमद्भगवते- 8/8/31-37
2. श्रीमद्भगवते- 8/9/9-10
3. श्रीमद्भगवते- 8/9/27

तावत्किञ्चिद्वक्तुमीहे।

## कुम्भस्थानानि कुम्भयोगाश्च

पाणिनीयव्याकरणानुसारं स्त्रीलिङ्गवाची **कु** शब्दस्यार्थो भवति भूमिस्तेन कुं भूमिं उम्भति पूरयतीति कुम्भः । अनया व्युत्पत्त्या सिञ्चनादिविधिना सस्यादिभिश्च पूरयति भूमिमिति कुम्भो भवति घट इत्यपरपर्यायः। उपर्युक्ताख्यानानुसारं अमृतपूर्णो घटः समुद्रमन्थनादुत्पन्न इति सिद्ध्यति। सुधापानावसरे देवानाममृतपानानन्तरमवशिष्टममृतमवाप्तुं दानवैर्विष्णोरुपर्याक्रमणं विहितम्, दानवेभ्यः सुधां संरक्षयितुं विष्णुना यस्मिन् काले यत्र-यत्रामृतकलशं संस्थापितं तत्र-तत्र कुम्भयोगो भवतीत्यपि सिद्धमेव। विषयेऽस्मिन् पुराणादिषूपलब्धेषु निबन्धेषु च नैतत्प्रमाणमेकत्रोपलभ्यते यदेतानि स्थानानि कुम्भपर्वाय सुनिश्चितानि सन्ति। तथापि कृत्यमञ्जर्यां कुम्भपर्वाय स्थानत्रयस्योल्लेखो विहितस्तस्यैवोद्धरणं प्रस्तूयता मैथिलेन विदुषा स्वनामधन्येन झोपाह्वेन म.म.पं. अमृतनाथेन स्वकीये **कृत्यसारसमुच्चय**नाम्नि ग्रन्थे एवं लिखितं यत्-

अथ हरिद्वारे कुम्भयोगः-

**पद्मिनीनायके मेषे कुम्भराशिगते गुरौ।**
**गङ्गाद्वारे भवेद्योगः कुम्भनामा तदोत्तमः॥**

अर्थाद्यदा बृहस्पतिः कुम्भराशौ भवेत्तस्मिन् वर्षे मेषसङ्क्रान्तौ त्वयं योगः।

अथ गोदावरीतीर्थे (नासिकक्षेत्रे) कुम्भयोगः-

**कर्के गुरुस्तथा भानुश्चन्द्रश्चन्द्रक्षयस्तदा।**
**गोदावर्यां तदा कुम्भो जायतेऽवनिमण्डले॥**

अयं योगस्तदा यदा गुरुः कर्कराशौ भवेत्तस्मिन् वर्षे श्रावण्याममावास्यायां सम्भवति। परमत्र संशोधनं दृश्यते कामेश्वरसिंहदरभङ्गाविश्वविद्यालयतः प्रकाशिते विश्वविद्यालयपञ्चाङ्गे। यथा- **सिंहे गुरुस्तथा भानुश्चन्द्रश्चन्द्रक्षयस्तदा** इति। साम्प्रतं सिंहराशौ गुरुगते नासिकक्षेत्रे कुम्भयोगो भवतीति सिद्धमेव। अस्मिन्नपि वर्षे भाद्रपदमासे नासिके कुम्भयोग आसीदिति सर्वैरनुज्ञायताम्।

अथ प्रयागतीर्थे कुम्भयोगः-

**माघामायां मृगे भानौ मेषराशिगते गुरौ।**
**कुम्भयोगो भवेत्तत्र प्रयागे त्वतिदुर्लभः॥**[1]

परमहंसेन हरिहरानन्दसरस्वतिना स्वामिकरपात्रिमहोदयेन स्वकीये **कुम्भपर्वनिर्णय** इत्याख्ये ग्रन्थे 22 तमे पृष्ठे पुराणोक्तं किं वा धर्मशास्त्रोक्तं स्वीयं वा वचनमिदमुद्धृतम्-

1. म.म.अमृतनाथझाकृते कृत्यसारसमुच्चये 50-51 पृष्ठयोः टिप्पण्याम्।

**देवानां द्वादशाहोभिर्मार्त्यैर्द्वादशवत्सरैः।**
**कुम्भपर्वाणि जायन्ते तथा द्वादशसंख्यया॥**

अनेनेदं सिद्ध्यति यद्देवतानांदद्वा दशदिनानि मनुष्याणां द्वादशवर्षात्मकानि भवन्ति। मनुस्मृतावपि-

**दैवे राञ्यहनी वर्षं प्रविभागस्तयोः पुनः।**
**अहस्तत्रोदगयनं रात्रिः स्याद्दक्षिणायनम्॥**[1]

अर्थान्मानुषाणां वर्षं देवानां रात्रिदिने भवतः। नराणामुत्तरायनं देवानामहः, तत्र प्रायेण दैवकर्मणामनुष्ठानम्। मानवानां दक्षिणायनं तु देवानां रात्रिरिति। तेन देवानां द्वादशदिनेषु मानवानां द्वादशवर्षेषु वा द्वादशकुम्भपर्वाणि भवन्तीति स्पष्टं ज्ञायते।

अत्रेदमपि नाविदितमस्ति केषाञ्चिद्यत् भारतदेशे यवनाङ्गलादीनां क्रूरकर्माणि बहुषु शतकेषु जातानि। तैरत्रत्यं मौलिकं शास्त्रं सिद्धान्तं चोन्मूलयितुमनेकविधप्रयत्नं विहितम्। नालन्दाविश्वविद्यालयस्थितस्य पुस्तकालस्य विषयेऽपि सर्वे विदन्त्येव। तेनेदं सिद्धं यदस्माकं गौरवभूतानि शास्त्राणि तत्र महानलग्रासभूतानि जातानीति। तथापि भारतभुवः सुपुत्राणां सत्प्रयासैरनेकविधानि शास्त्राणि क्वचित्ताम्रपत्र-स्वर्णपत्र-भूर्जपत्र-तालपत्राणां माध्यमेनास्माभिरद्याप्यन्विष्य समुपलब्धानि क्रियन्ते। अद्यत्वे विकासशीले भारतदेशे प्राक्तनसाहित्यानामभावात् कतिपयस्थलेषु हृदि घोरं दुःखमुत्पद्यते। अनेके प्रश्नाः सन्ति येषामुत्तराणि नोपलभ्यन्ते। भवितुमर्हति यत्तादृशानां प्रश्नानामुत्तराणि अप्रकाशितानां ग्रन्थानां प्रकाशनेन प्राप्ताः स्युः। एतदर्थमद्याप्यनेके विद्वांसो विदुष्यश्च प्रयासरताः सन्ति। तेष्वेव सत्प्रयासेषु **मिथिलाक्षेत्रस्य जमुथरिग्रामवास्तव्यानां व्याकरणसाहित्यतन्त्रादिशास्त्रज्ञानां पण्डितप्रवराणां मतिनाथमिश्रमहोदयानां सत्प्रयासेनाधुना रुद्रयामलोक्तामृतीकरणप्रयोगनामको लघुकायग्रन्थः कामेश्वरसिंहदरभङ्गसंस्कृत-विश्वविद्यालयस्य वेदविभागाध्यक्षैः वैदिकप्रवरैराचार्यविद्येश्वरझोपाख्यैः प्रकाशमानीतः।** पं. मतिनाथमिश्रमहोदयाः मिथिलाप्रान्ते सुलतानगञ्जस्थ संस्कृतविद्यालये स्वाध्यायाध्यापनञ्चाकुर्वन्। तत्र विविधशास्त्राणां तालपत्रोपर्युल्लिखिताः पाण्डुलिपय आसन्। तेषु केषाञ्चन पत्राणां प्रतिलिपिं विधाय ते स्वपार्श्वे संरक्षितवन्तः। **अस्य ग्रन्थस्य पाण्डुलिपिः तिरहुतायां लिप्यामासीत्। पं.मिश्रवर्येण देवनागर्या लिप्यन्तरमकारयत्।** दैवसंयोगात् पञ्चत्रिंशद्वर्षपूर्वं ते मान्याः कामेश्वरसिंह-दरभङ्गाविश्वविद्यालयस्य साहित्यविभागे आचार्यपदमलङ्कुर्वद्भ्यो पं.श्रीलक्ष्मीनाथझोपाह्वेभ्योऽध्येतुं प्रदत्तवन्तः इति प्रकाशितस्यास्य पुस्तकस्यारम्भे स्पष्टमुल्लिखितोऽस्ति।

गुरुवरेणाचार्यविद्येश्वरझोपाह्वेन महता परिश्रमेणास्य दुर्लभग्रन्थस्य हिन्द्यामनुवादं सम्पादनञ्च कृतम्। रुद्रयामलनाम्नि प्रकाशिते ग्रन्थे अंशस्यास्याभावो दृश्यते। भवितुमर्हति यत् सम्पादकस्य पार्श्वे भागोऽयमुपलब्धो न स्यादिति। अतोऽग्रिमे संस्करणे अंशस्यास्य योगोऽपि स्यादिति मदीयो विचारः।

---

1. मनुस्मृतौ- 1/67

येन सर्वसाधारणेभ्यो जनेभ्यो रहस्यात्मकं तथ्यमिदं सुलभं स्यादिति। अतोऽधुना तत्रोक्तानि कुम्भस्थानानि कुम्भयोगाश्चात्र सहर्षमुपस्थापयामि।

**रुद्रयामलोक्तामृतीकरणप्रयोगोक्तानि कुम्भस्थानानि कुम्भयोगाश्च**

ग्रन्थेऽस्मिन् पञ्चपञ्चाशदुत्तरशतं श्लोका: सन्ति। शिवपार्वतीसंवादात्मक: प्रसङ्गोऽत्र वर्णितोऽस्ति। समुद्रमन्थनप्रसङ्गमारभ्य चतुर्दशरत्नपूजनपाठफलवर्णनेन च ग्रन्थोऽयं समाप्तिं याति। ग्रन्थस्योत्तरार्द्धे त्रयोदशोत्तरशतमारभ्याष्टाविंशत्युत्तरशततमं श्लोकपर्यन्तं द्वादशस्थलेषु भूयमानानां कुम्भयोगानां वर्णनमस्ति। यच्च न क्वाप्यन्यत्र एवं विस्तृतमुपलभ्यते। तद्यथा–

**अतः परं प्रवक्ष्यामि सुधा वितरणे यथा।**
**देवानां संहतिं दृष्ट्वा सुधानिःशेषशङ्कया॥**

**देवरूपं समास्थाय राहुर्देवेषु सङ्गतः।**
**सूर्योऽपश्यच्च तं पूर्वं राहुं पश्चाच्च चन्द्रमाः॥**

**प्रच्छन्नं राहुसञ्चारं कथयामास शङ्कितः।**
**राहोः सप्तमराशिस्थः सङ्गतोऽनेकरूपधृक्॥**

**क्षणात् श्वेतो बभूवाथ मङ्गलानि च दर्शयन्।**
**श्वेते केतौ सदा शान्तिर्भवतीह न संशयः॥**

**केतुञ्चोत्पातरहितं दृष्ट्वा विष्णुर्न दत्तवान्।**
**ध्यानन्तु राहुसञ्चारे सूर्यचन्द्रप्रभाषिते॥**

**तदा सूर्यश्च चन्द्रश्च तुलामाश्रित्य ऊचतुः।**
**गुरुश्च सर्वं विज्ञाय विष्णुप्रत्ययहेतवे॥**

**भानुना सह चन्द्रस्य यदा योगो भवेत् शुभे।**
**कृष्णपक्षे त्रयोदश्यां तदा योगोऽमृतः प्रिये॥**

**नद्यास्तीरं समाश्रित्य स्नानं कुर्याद्विचक्षणः।**
**अस्मिन्नमृतयोगे तु स्नात्वा तीर्थे फलं महत्॥**

एवं पार्वत्या: प्रश्ने कृते सति भगवता शङ्करेणोक्तं यत् हे शुभे! सूर्यचन्द्रयोर्योगो यदा कृष्णपक्षस्य त्रयोदश्यां भवति तदाऽमृतयोग: सिद्ध्यति। तदानीं नद्यास्तीरमाश्रित्य बुद्धिमद्भि: स्थातव्यं स्नानदानञ्च कर्त्तव्यम्। अमृतयोगेऽस्मिन् स्नात्वा महत्फलं लभ्यत इति।

**गुरोरपि यदा योगस्तस्य पुण्यं न वर्ण्यते।**
**मासं यावद्भवेत्तीर्थं तदाऽमृतमयं शुभे॥**

तस्मिन् काले यदि गुरोरपि योगः स्याच्चेत्तदा तस्य पुण्यस्य वर्णनं न कर्तुं शक्यते। हे प्रिये! एतादृशे योगे जाते सति मासपर्यन्तं तत्तीर्थममृतमयं भवति।

**देवाश्चागत्य मज्जन्ति तत्र मासं वसन्ति च।**
**तस्मिन् स्नानेन दानेन पुण्यमक्षय्यमाप्नुयात्॥122॥**

एतादृशे शुभे योगे देवगणाः मासपर्यन्तं तस्मिन् तीर्थे स्थित्वा स्नानं कुर्वन्ति। योगोऽयं कुम्भयोगनाम्ना विश्रुतोऽस्ति भूतले। योगेऽस्मिन् स्नानदानाभ्यां मनुष्यस्त्वक्षय्यं पुण्यमवाप्नोति।

**सिंहे युतौ तु रेवायां मिथुने पुरुषोत्तमे।**
**मीने ब्रह्मपुत्रे च तव क्षेत्रे वरानने॥123॥**

सिंहराशौ यदैतादृशो योगो भवति तदानीं रेवायाम् (वर्त्तमाने गुर्जरमध्यप्रदेशयोरन्तरं प्रवहमानायां नर्मदेत्याख्यायाम्), अत्र ध्यातव्यं यत् कृत्यसारसमुच्चयानुसारं सिंहे गुरौ भानौ च महाराष्ट्रे नासिकस्थितायां गोदाबर्यां कुम्भो भवति। तच्चेदानीं प्रचलितमस्ति। मिथुनराशौ एतादृशे योगे जाते सति पुरुषोत्तमक्षेत्रे (जगन्नाथपुर्याम्), मीनराशौ योगे जाते सति ब्रह्मपुत्रे (गौहाट्याम्) हे वरानने! तव क्षेत्रे (कामाख्यायाम्) भवति।

**धनुराशिस्थिते भानौ गङ्गासागरसङ्गमे।**
**कुम्भराशौ तु काबेर्यां तुलार्के शाल्मलीवने॥124॥**

**वृश्चिके ब्रह्मसरसि कर्कटे कृष्णशासने।**
**कन्यायां दक्षिणे सिन्धौ यत्राहं रामपूजितः॥**

**अथाप्यन्योऽपि योगोऽस्ति यत्र स्नानं सुधोपमम्॥125॥**

सूर्यो यदा धनुराशिस्थो भवति तदा गङ्गासागरसङ्गमस्थले, कुम्भराशौ सूर्ये स्थिते सति काबेर्याम् (तमिलनाडुराज्ये), तुलार्के शाल्मलीवने (मिथिलायां सिमरियायाम्), वृश्चिकराशौ सूर्ये स्थिते सति ब्रह्मसरोवरे (कुरुक्षेत्रे), कर्कराशौ स्थिते सूर्ये कृष्णशासने (द्वारकापुर्याम्), कन्याराशौ दक्षिणसिन्धौ (रामेश्वरे) यत्र रामेणाहं पूजितः तस्मिन् स्थले कुम्भयोगो भवति। अन्यत्रापि यथा–

**मेषराशिस्थिते भानौ कुम्भे च गुरौ स्थितौ।**
**गङ्गाद्वारे भवेद्योगो भुक्तिमुक्तिप्रदः शिवे॥126॥**

मेषराशिगते सूर्ये कुम्भराशिगते गुरौ च गङ्गाद्वारे (हरिद्वारे) योगोऽयं भवति यद्भुक्तिमुक्तिप्रदो भवति।

**मेषे गुरौ तथा देवि मकरस्थे दिवाकरे।**
**त्रिवेण्यां जायते योगः सद्योऽमृतफलं लभेत्॥127॥**

मेषस्थे गुरौ मकरराशिस्थे च श्रीसूर्ये जाते सत्ययं योगो प्रयागस्थिते सङ्गमस्थले त्रिवेण्यां जायते, यत्सद्योऽमृतफलं प्रयच्छति।

**शिप्रायां मेषगे सूर्ये सिंहस्थे च बृहस्पतौ।**
**मासं यावन्नरः स्थित्वाऽमृतत्वं याति दुर्लभम्॥128॥**[1]

मेषगते श्रीसूर्ये सिंहस्थे गुरौ चायं योगो शिप्रायां (उज्जयिन्याम्) जायते। एतेषु स्थलेषु मासं यावदवस्थाय स्नानदानेन मानवाः दुर्लभममृतत्वमवाप्नुवन्ति।

**निष्कर्षः**– एवमुक्तविवेचनेनेदं स्फुटं भवति यदनेके ग्रन्थाः सन्दर्भाश्च प्राचीनैराचार्यैः यत्र तत्र संरक्षितास्तेषामन्वेषणमद्यास्माभिः कर्त्तव्यम्। बहवोऽपि सन्दर्भास्सन्ति येषां स्रोतांसि नोपलभ्यन्ते। यथा– भगवता पतञ्जलिना स्वकीये महाभाष्ये **अनृष्यानन्तर्ये**[2] इति सूत्रभाष्यप्रसङ्गे विश्वामित्रेण तपोबलेन स्वपितरि पितामहे च मन्त्रद्रष्टृत्वं सम्पादितमिति प्रसङ्ग उक्तः। **विश्वामित्रस्तपस्तेपे नानृषिः स्याम् इति। तत्र भवानृषिः सम्पन्नः। स पुनस्तपस्तेपे नानृषेः पुत्रः स्याम् इति। तत्र भवान् गाधिरपि ऋषिः सम्पन्नः। स पुनस्तपस्तेपे नोऽनृषेः पौत्रः स्यामिति। तत्र भवान् कुशिकोऽपि ऋषिः सम्पन्न इति।** सन्दर्भोऽयं पुराणेषु विद्यत इति पतञ्जलिनोक्तं परं नायं सन्दर्भः समुपलब्धेषु पुराणेषूपलभ्यते। एतादृशा अनेके सन्दर्भास्सन्ति येषां स्रोतांसि नोपलभ्यन्ते। अतो येषां ग्रन्थानां पाण्डुलिप्यादयः प्राप्यन्ते तेषां प्रकाशनेन विविधाः प्रश्नाः स्वयमेव समाधिता भविष्यन्ति। नात्र कस्याप्याग्रहो दुराग्रहो वा भवेदिति।

एवमुक्तप्रकारेण द्वादशस्थलेषु शुभपुण्यप्रदे योगे द्वादशकुम्भपर्वाणि जायन्ते तस्मिन् विषये यथामति मयाऽत्र संक्षेपेण वर्णनं कृतम्। इतोऽप्यधिकानि कुम्भस्थलानि समग्रे भारते भवितुमर्हन्ति येषामन्वेषणमस्माभिः सम्भूय करणीयम्। यथा वृन्दावनेऽपि कुम्भयोगस्य चर्चा क्वचिन्मया पठिता। एवमस्त्यत्राधिकाधिकशोधकार्यस्यावश्यकतेति शम्।

---

1. रुद्रयामलोक्तामृतीकरणप्रयोगे– 69–71 पृष्ठेषु, रमणप्रेस दरभङ्गातः 2011 तमे वर्षे प्रकाशिते, सम्पादकः डॉ. विद्येश्वर झा
2. पा०–4/1/104

# अभिनवसीतारावणसंवादझरीति ग्रन्थस्य वैशिष्ट्यविवेचनम्

**डॉ. ज्ञानधारपाठकः**

सीतारावणसंवादझरीति नामकानां त्रायाणां ग्रन्थानां प्रतिपाद्यविषयः वाल्मीकि-रामायणस्य सुन्दरकाण्डस्य विंशतिसर्गादारभ्य द्वाविंशतिसर्गपर्यन्तं विद्यमानं कथानकमनुसृत्य चित्रकाव्यान्तर्गतप्रमुखभेदरूपाया प्रहेलिकाया विभिन्नभेदानां च्युताक्षरादत्ताक्षराप्रतिदत्ताक्षरा-प्रभेदानामनुपदमुपयोगेन श्रीरामशास्त्री सीतारावणसंवादझरीनामकस्य प्रहेलिकाप्रबन्धस्य प्रणयनं कृतवान्। अनेन कुवलयानन्दोदाहृतं ''भवित्रीरम्भोरु...!'' इतिपद्यं दृष्ट्वा तादृशशतश्लोकीयस्य काव्यस्य निर्माणाय संकल्पः कृतः। दुष्करकाव्यत्वात् पञ्चाशत्पद्यपरिमिता रचनाऽऽनेन विहिता। ग्रन्थस्यास्य वैशिष्ट्यमिदं वर्तते यद् अस्य प्रत्येकपद्यस्यादिमेषु त्रिषु चरणेषु रावणस्यात्मप्रशंसा रामनिन्दा च विद्यते। चतुर्थे चरणे सीतासंकेतेन कस्यचित् वर्णविशेषस्य च्यवनात् वर्णदानात् उतवा वर्णप्रतिदानात् रावणोक्तिषु चरणत्रयेऽपि रामप्रशंसारूपेण रावणनिन्दारूपेण चार्थं परिवर्तयति। श्रीरामशास्त्रिणः शिष्येण श्रीसीतारामशास्त्रिणा सीतारावणसंवादझर्य्युत्तरभागः इति नाम्ना काव्यस्योत्तरभागं पञ्चाशत्प्रहेलिकापद्यात्मकं विरचय्य स्वगुरोः संकल्पस्य परिपूरणमकारि। श्रीरामशास्त्री स्वग्रंथरचनान्ते इत्थम् उक्तवान् यद् यः कोऽपि तादृशं प्रहेलिकामयं प्रबन्धं रचयिष्यति तस्मै सहस्रं प्रणामानर्पयिष्यामीति। पद्यमिदं दृष्ट्वा बच्चुसुव्वारायगुप्तः तमेव कथानकमाश्रित्य पञ्चाशत्पद्यैः अभिनवसीतारावणसंवादझरीति ग्रन्थस्य रचनां कृतवान्। अस्य ग्रन्थस्य अभिनवता विद्यते यत् प्रत्येकस्य श्लोकस्य आदिचरणद्वये रामनिन्दा तृतीये चरणे रावणप्रशंसा चतुर्थे चरणे सीतासमाधानञ्चेति। चतुर्थे चरणे सीतासंकेतेन च्युतदत्तप्रतिदत्ताभिः प्रथमचरणद्वये रामप्रशंसा परं तृतीये चरणे रावणनिन्दारूपमर्थं परिवर्तयति।

**ग्रन्थकारस्य परिचयः**

अनिभवसीतारावणसंवादझरीतिकाव्यस्य रचयिता बच्चुसुब्बारायगुप्तोऽस्ति। वस्तुः तस्य नाम तु सुव्वारायगुप्तोऽस्ति। यथा ग्रन्थे निर्दिष्टं वर्तते-

**बच्चुवंशाब्दिसोमेन नागयाह्वयं सूनुना।**[1]

तस्य पितुर्नाम श्रीबच्चुनागयगुप्तोऽस्ति। दाक्षिणात्यपरम्परायां जनाः स्वनामपूर्वं ग्रामनाम पितुर्नाम च लिखन्ति। अनेनैव क्रमेणायं जनोऽपि स्वनामपूर्वं स्वपितुर्नाम लिखितवान्। अस्य सुकृतेः कवेः

1. अभिनवसीतारावणसंवादझरीपृष्ठसंख्या 5

जन्म दिनांके 3/11/1902 ईश्वीयेऽभवत् विद्वत्कविसार्वभौमश्श्रीबच्चुसुव्वारायगुप्त: शुभकृन्नाम्निवत्सरे कार्तिकशुद्धद्वितीयायां जनिमलभत।[1]

अयं यशश्श्री: कवि: आन्धप्रदेशस्य कर्नूलुमण्डलान्तर्गत औकुपुरनिवासिनां बच्चुनागयश्रेष्ठिनां प्रथमपुत्र: सुव्वारायनामधेयोऽस्ति।[2]

**श्रीमदौकुपुरीवासवासनावासितात्मना ।**
**बच्च्युवंशाब्दिसोमेन नागयाह्वयसूनुना।।[3]**

**अस्य मातुर्नाम 'पार्वती' इत्यासीत्।**
**पार्वत्यम्बा गर्भशुक्तिमौक्तिकेन सुभाषिणा।।[4]**

अस्य जीवनावधौ षष्टिवर्षावस्थायां एव 1963 ईश्वीयपूर्वं कलत्रवियोगोऽभवत्, कलत्रवियोगाद् मनसि बहु:दुखमवाप्तवान्। ग्रन्थस्य भूमिकायां तेनैव विलिखितं यत् व्यावहारिकक्लेशेन कलत्रवियोगादिमनस्सङ्कटैश्च श्लोकानिमान् मुद्रापयितुं नापारयम्।।[5]

औकुपुरवास्तव्यस्य श्रीबच्चुसुव्वारायगुप्तस्य कर्नूलुमण्डलान्तर्गते संस्कृतपाठशालायां 1919 वर्षादारभ्य 1920 वर्षपर्यन्तं श्रीमतां राचेर्ल श्रीनिवासाचार्यमहोदयानां सविधे संस्कृतविद्याया: शिक्षाऽभवत्।[6] अस्य कवे: गुरुश्श्रीनिवासाचार्योऽस्ति–''श्रीनिवासाचार्यशिष्येण वैश्यवंशसुजन्मना।''[7] अनेन सुकृतिना कविना श्रीचन्द्रशेखरशास्त्रिमहाभागस्य सकाशे तर्कशास्त्रमधिगतम् ''श्रीमतां राचेर्ल श्रीनिवासचार्यमहोदयानां सविधे संस्कृतविद्यामधीत्य, ततोऽप्यतृप्तमनस्केन मया श्रीविरूपाक्षपीठास्थानपण्डितानां पमिडिमर्रिचन्द्रशेखरशास्त्रिमहाभागानां सकाशे किंचित् तर्कशास्त्रं समधिगतम्।''[8] अयं कविवर: न केवलं संस्कृतभाषायां दक्षतां प्राप्तवान्नपितु तेलगुभाषायामपि काव्यनिर्माणेऽभ्यस्तोऽस्ति। यथा ग्रन्थे निर्दिष्टं वर्तते–

**आंध्रगीर्वाणादिभाषाभ्यासविज्ञानशालिना।**
**कविताभ्यासयुक्तेन सुब्बारायेण धीमता।।[9]**

---

1. अभिनससीतारावणसंवादझरीभूमिकाभाग: पृष्ठसंख्या 36
2. अभिनवसीतारावणसंवादझरीपृष्ठसंख्या 1
3. अभिनवसीतारावणसंवादझरीपृष्ठसंख्या 5
4. अभिनवसीतारावणसंवादझरीपृष्ठसंख्या 6
5. अभिनवसीतारावणसंवादझरी भूमिकाभाग: पृष्ठसंख्या 1
6. अभिनवसीतारावणसंवादझरी भूमिकाभाग: पृष्ठसंख्या 1
7. अभिनवसीतारावणसंवादझरी पृष्ठसंख्या 6
8. अभिनवसीतारावणसंवादझरी भूमिकाभाग: पृष्ठसंख्या 1
9. अभिनवसीतारावणसंवादझरी पृष्ठसंख्या 6

**अभिनव-सीतारावणसंवादझरी-निर्माणेऽवधारणा**

श्रीबच्चुसुब्बारायगुप्तः तत्कालस्थ मैसूरराजधान्यामास्थानविद्वभिर्विरचितस्य सीतारावणसंवादझरीति नामकग्रन्थस्य पद्यमिदं पठितवान्-

**अन्यूनैश्शतकात्कृतिमिमं गूढार्थपद्यैर्युता**
**कर्तव्येति ससंविदप्यतिचिरश्रान्तो मतिक्षोभतः।**
**विश्रान्तोऽस्म्यवशिष्टमर्धशतकं संग्रथ्य मत्संविदा**
**सार्धं यः परिपूरयेत् कृतिमिमां तस्मै सहस्रं नमः॥**[1]

श्लोकमिमं विलोक्य तन्मनसि कृत्वा तद्ग्रन्थपूरणे संलग्नोऽभवत्। ग्रन्थकारो विज्ञप्तौ लिखितवान् यत्- ''तत्कालस्थमैसूरराजधान्यामास्थानविद्वद्भिर्विरचितम् 'सीतारावणसंवादझरीति नामकं ग्रन्थमामूलमवालोकिषम् ''शतश्लोकैः पूरणीयमिदं ग्रन्थं क्लेशाधिक्येन पञ्चाशच्छलोकैरेव परिमितं कृतमि''ति तद्ग्रन्थकर्तृभिरेव विलिखितम्। तत् मनसि कृत्वा तद्ग्रन्थपूरणे लग्नमनस्कोऽभवम्। भागवतानुग्रहेण महताशीबलेन च अवशिष्टान् पञ्चाशच्छलोकान् व्यरचयम्।''[2] ग्रन्थरचनान्तरं मुद्राणाय यत्क्लेशः सुकृतिनाऽनेन श्रीबच्चुसुब्बारायगुप्तेनावाप्तः तेन ग्रन्थे निर्दिष्टो ग्रन्थलेखनान्तरम् ''ततो मया बहुवारं बहूनां पण्डितानां समीपे पुस्तकस्य मुद्रणविषयः प्रस्तुतः। केचिदवकाशो नास्तीति, अपरे पण्डितैकबोध्यस्यास्य मुद्रणे को लाभ इति कतिचिच्च कैश्चिदन्यैः कारणैः मां निरुत्साहवन्तमकार्षुः।'' ग्रन्थस्यास्य मुद्रणं प्रथमतः 1963 वत्सरे भाषालिप्यां ग्रन्थकारस्य संस्कृतटीकया श्रीपुल्लापन्तुलवेंकटरामशर्मभिर्भाषानुवादेन साकमभवत्। अस्य ग्रन्थस्यान्ध्रभाषायां टीका कर्नूलुपुरवासी पुल्लापन्तुलवेंकटरामशर्मा कृतवान्। तथा चाग्लभाषानुवादं श्रीकर्नूलु आंग्लकलाशालायां प्राध्यापकः श्री यन्. वि. कृष्णमूर्तिमहोदयः कृतवान्। एवमेव हिन्दीभाषानुवादम् उस्मानियाकलाशालायाः हिन्द्यध्यापकमहोदयः विद्वान् श्री टि. वेंकटसुब्बय्य बी.ए. महोदयः कृतवान्।

**अभिनवसीतारावणसंवादझरीति नामकरणम्**

महीशूरवास्तव्येन रामशास्त्रिणा हनुमन्नाटकोदाहृते श्लोक एव हेतुतामुपयाति इति निश्चेतुं शक्यते। अत एव ते रामनिन्दां रावणस्तुतिं सीतासमाधनम् एव प्रधानतया स्वीचक्रुः। एतद्ग्रन्थकर्तारः श्रीबच्चुसुव्वारायगुप्तास्तु आद्ये चरणद्वये रामनिन्दां तृतीये चरणे च रावणस्तुतिं चतुर्थे चरणे सीतासमाधानञ्च बबन्ध। एवमेवैषनियमः प्रतिश्लोकमनुसृतः। आवापे उद्वापे संकेतिताः वर्णाः प्रतिचरणं यथास्थान निर्दिष्टाः। यथा-

**सम्प्राप्ते कलहे प्रियेण तव मद्बाणा भवेयु र्न किं**
**सोत्कर्षा नगरी च भूमकलितास्याम्मोदकस्सन्नृणाम्।**

1. सीतारावणसंवादझरी पृष्ठसंख्या 140
2. अभिनवसीतारावणसंवादझरीविज्ञापना पृष्ठसंख्या 1

**क्षेणीनन्दिनि! च प्रमाणपटुः युद्धेऽरिभीमोऽभवं**

**व्याहारं वदतात्स्मरामि कुमते! रे नीच! मेतं खल!॥[1]**

प्रस्तुतेन पद्येन परिचीयते यत् आद्ये चरणद्वये रामनिन्दा तृतीये चरणे रावणप्रशंसा चतुर्थे चरणे सीतासमाधानञ्च वर्तते।

**असुनाथस्तु धरासुते! विकलसत्तेजाश्च जानाम्यहं**

**न सुरापालकसत्पराक्रम इति प्रख्याति मात्तः किमु।**

**अपि कान्त्यां कलयावृतोऽहमयि! मां जानासि सीते! न किं**

**खल! रेऽलं त्यज वादमेतखिलं कं वापि मा जल्पतात्॥[2]**

अस्मिन् पद्येऽपि पादद्वये रामनिन्दा तृतीये पादे रावणप्रशंसा चतुर्थे पादे सीतासमाधानञ्च वर्तते। अत्र लोपादिविषयाः नूनवर्णाः सर्वेषु पद्येषु वर्तन्तेऽतो हेतो अभिनवता वर्तते। पूर्ववर्तिनां कवीनां चामराजनगरीरामशास्त्रिणां ग्रन्थे सीतारावणसंवादझर्यां सर्वत्र तादृशी व्यवस्था न वर्तते। अनेन सुकृतिना कविना श्रीगुप्तेनाभिनवसीतारावणसंवादझरीविषये ग्रन्थे तत्र लिखितम्। यत्-

**पुष्टार्थवृताशब्दैः चित्रैः कलितातिदुष्करारम्भा।**

**अभिनवसीतारावणसंवादझरी कृतिरियं क्रियते॥[3]**

**अभिनवसीतारावणसंवादझर्याः पूर्वापरविमर्शः**

शास्त्रिगुप्ताख्ययोः अनयोः कवयोः समानवर्णलोपादिविषयं परिशीलयामः-

**रामो वाच्यतिविप्रियोऽतिचलितश्रीस्तन्वि नीचं वपुः**

**बिभ्रत्काननसीम्निराक्षसचयायत्तः स्वयं वेत्सि तम्।**

**मां पश्यातिविचक्षणोऽस्मि बहुधा चापैकवीरोस्म्यहं**

**लब्धश्रीप्रचयः तथापि किमरे चेलं बधानासकृत्॥[4]**

अस्मिन् श्लोके चकारस्थाने लकारादेशो अनुमतश्चेत् तादृशानि

पदान्यभिनवसीतारावणसंवादझरीनामके ग्रन्थे एकोनविंशश्लोके प्राप्यन्ते।

---

1. अभिनवसीतारावणसंवादझरी पृष्ठसंख्या 39
2. अभिनवसीतारावणसंवादझरी पृष्ठसंख्या 143
3. अभिनवसीतारावणसंवादझरी पृष्ठसंख्या 6
4. सीतारावणसंवादझरी पृष्ठसंख्या 25

**सीते! ह्रीरयशो गणो रतिपटू रामोचितत्विण्मुखो**
**रातिश्लाघ्यगुणस्सदा जनकजे! लोके परीतप्रभः।**
**युद्धे रूढजयेऽयभं किल मया सम्मारिता धातुकाः**
**क्रव्यादाधम! पाप! नीच! वचने रे! न श्रुतिर्वर्तिता।।**[1]

अस्मिन् पद्येऽपि रकारस्थाने नकारं योजय इति भावः।

**परिक्षीणालस्यः समरभुवि रक्षः कुलपतिः**
**सलज्जः स्वस्तुत्याममलहि मार्गैकपथिकः।**
**प्रणम्रस्त्रीलभ्यः सुमुखि विलसत्कीर्तिरिति च**
**श्रुतो नाहं किं रेऽधम! मुहुरलं त्वां श्रुतवती।।**[2]

अस्मिन् रामशास्त्रीये पद्ये प्रथमे षट्सु स्थानेषु लकारत्यागः दृश्यते। एवमेव परिपूरयतारश्च पूर्वस्थितानि पदानि अगृहीत्वा भिन्नतया नूत्नानि पदानि स्वीकृत्य प्रथमश्लोके सप्तसु स्थानेषु लकारस्य त्यागो वर्तते। तद्यथा–

**भूजातेऽलसमानविग्रहयुतः सीते ह्यलर्कोपमः**
**भर्ता ते विकलस्वरस्ववदनो युद्धे चलश्रीवृतः।**
**निष्णातो ललनानुरूपतनुसंयुत्तोऽस्म्यहं पालने**
**वाक्ते पाप सदाविलेति सुजनाः केन ब्रुवन्ति क्षितौ।।**[3]

**अभिनवसीतारावणसंवादझर्य्यां प्रहेलिकास्वरूपविमर्शः**

काव्येऽस्मिन् सर्वेषु श्लोकेषु पादत्रयेषु मृषारामनिन्दा मृषारावणस्तुतिश्च रावणोक्त्या कृता सा च चतुर्थपादे सीताप्रत्युक्तौ संकेतितार्थे अक्षरत्यागेन अक्षरस्थाने अक्षरान्तरप्रवेशेन च रामनिन्दास्तुतिरूपेण रावणस्तुतिः निन्दारूपेण च पर्यवसति। इदञ्च च्यावितात्क्षरीचित्रं प्रतिदत्तक्षरीचित्रमिति च व्यवह्रियते ग्रन्थेऽस्मिन् अधिदत्ताक्षरस्याभावः विद्यते। संकेतितपदानि सर्वेषु त्रिष्वपि रावणोक्तिरूपेषु भविष्यन्ति। केषुचित् श्लोकेषु रामनिन्दारावणस्तुतिर्वा उत द्वयम् मिलित्वा वा भविष्यति। कुत्रचित् सकेतितार्थः लयशब्दसाहाय्यमपेक्ष्य जीवति। तेषु स्थलेषु शब्दसारग्रहणे नैव प्राप्तव्यः प्रमोदः।

---

1. अभिनवसीतारावणसंवादझरी पृष्ठसंख्या 69
2. सीतारावणसंवादझरी पृष्ठसंख्या 17
3. अभिनवसीतारावणसंवादझरी पृष्ठसंख्या 11

**सीते श्रीश्च विकाशिता खलु वधूकामप्रियांगस्य में**
**दारिद्र्यं पुरि कर्तितं गुणगणैः कालोचितप्रस्थितेः।**
**हा मायाकरकामितान्यललनालग्नां तरंगः प्रियः**
**पापात्मन् कलये न संगतमिदं सर्वं त्वदुक्तं वचः॥**[1]

पद्येऽस्मिन् कलये न संगतमित्यत्र ककारस्य लोपे नकारेण सहितमिति एवमेव-

**पद्मास्ये! परभीकरस्थिरमतिः सीतेऽनकर्मावृतः**
**त्रैलोक्येऽपि सदा शुभाकरहितः मद्भक्तिमास्ते नरः।**
**नाथस्तेऽविकसत्सुदीप्तिनिकरापद्बृन्दसंवेष्टितः**
**पापात्मन्! कलयेन संगतमिदं सर्वं त्वदुक्तं वचः॥**[2]

ककारलोपेन समीचीनमिति। एवमेव पद्येऽस्मिन्-

**त्रैलोक्येपि च पापासाध्वसयुतः मत्तोऽसमानोऽस्ति को**
**हे सीतेऽसभिकः समूढमनुजा मे पूरभवद्वेद हि।**
**प्राणानां दयितस्तु ते समिति वीतौजा अभूत्किं ततः**
**पापात्मन्! कलये न संगतमिदं सर्वं त्वदुक्तं वचः॥**[3]

पद्येऽस्मिन् सम-सकारम् न गतम्-न प्राप्तम, कलये मन्ये इति च एवं एकैकरूपपदसमाम्नायस्य अर्थत्रयकल्पने औचित्यं चातुर्यञ्च भवेत्।

**क्षोणीनंदिनि! नायकस्तु समरास्थित्यावृतः किं ततः**
**किं ब्रूषे मरणप्रियं तव पतिं विद्ध्येव तं सर्वदा।**
**ज्ञातो भूजनसञ्चयैश्च विममत्वाद्याधिकस्वतुतः**
**वामं निर्ममतावृतं तव वचो मेऽप्रीतिदं दुर्मुख!॥**[4]

---

1. अभिनवसीतारावणसंवादझरी पृष्ठसंख्या 21
2. अभिनवसीतारावणसंवादझरी पृष्ठसंख्या 98
3. अभिनवसीतारावणसंवादझरी पृष्ठसंख्या 133
4. अभिनवसीतारावणसंवादझरी पृष्ठसंख्या 76

पद्येऽस्मिन् च्यावितात्क्षरीप्रतिदत्ताक्षरीसंसृष्टिः वर्तते।

**संप्राप्ते कलहे प्रियेण तव मद्वाणा भवेयुर्न किं**
**सोत्कर्षा नकरी च भूमिकलिता स्याम्मोदकस्सन्नृणाम्।**
**क्षोणीनंदिनि! च प्रमारणपटुः युद्धेऽरिभीमोऽभवं**
**व्याहारं वदतात्स्मरामि कुमते! रे नीच! मेतं खल!॥[1]**

पद्येऽस्मिन् रावणस्तुतिः सीतासंकेतानुसारं रावणनिन्दां न पर्यवस्यति अपितु रामस्तुतिरभवत् श्रीयुतानां रामशास्त्रिणां कृतौ प्र-सम-नि न इत्यर्थजातेन अधिदत्ताक्षरीचितं परिकल्पितम्। एतादृशं चित्रं बुधजनमनोरञ्जनं न विदधातीति धिया न परिकल्पितमिति संभावनीयम्। प्रयाशः पूर्वकविना रामशास्त्रिणा अप्रयोगितवर्णैरेव च्यावितात्क्षरीप्रतिदत्ताक्षरीचित्राणामस्मिन् काव्ये कल्पनेन कवेरस्य स्वतन्त्रकल्पनाचातुर्यं व्यक्तीभवतीत्यलम्।

1. अभिनवसीतारावणसंवादझरी पृष्ठसंख्या 88

# सांख्यवेदान्तदर्शनयोः सृष्टिनिरूपणम्

**डॉ. शिवकुमारमिश्रः**

**राष्ट्रेषु भारतं रम्यं रम्यः संस्कृतवाङ्मयः।**
**तत्रापि संस्कृतिर्रम्या यत्र जाता मनीषिणः॥**

**भाषैका भारतीयानां देवभाषेति भण्यते।**
**स्वतः संस्कारयुक्तत्वात्संस्कृतं चापि कथ्यते॥**

**भावात्मकैकतास्माकी संस्कृतेनैव रक्षिता।**
**तस्मात्संस्कृतभाषायाः स्वाध्यायः प्रविधीयताम्॥**

**दर्शनं भारतस्यैव सर्वथा सारगर्भितम्।**
**प्रासंगिकं समायाति समस्ते विश्व-मण्डले॥**

तथास्तु।

भारतीयदर्शनेषु सृष्टिविषयकं, सम्यक् प्रतिपादनं विहितम्। तत्र विशेषतः आस्तिकदर्शनस्य विभिन्नसम्प्रदायेषु विविधानि मतानि प्रकटीकृतानि। तेषु मतेषु कुत्रचित् परमाणुकारणवादः प्रतिपादितः कुत्रचिच्च सत्कार्यवादो विवेचितः पुनः क्वचित् परिणामवादः प्रतिपादितस्तु क्वचित् विवर्त्तवादो निरूपितः।

**असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात्।**
**शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम्॥**[1]

अनेनैव प्रकारेण क्वचित् द्वैतवादस्य प्राधान्यं समवलोक्यते तु क्वचित् अद्वैतवादविशिष्टाद्वैत-वादादयः 'सिद्धान्ताः समालोचिताः एतेषु सृष्टिविषयकसिद्धान्तेषु सत्कार्यवादं परिणामवादं वा आधृत्य सांख्यदर्शनं द्वैतवादे प्रतिष्ठापितं विद्यते अन्यतः यद्यपि वेदान्तदर्शनस्य विभिन्नसम्प्रदायेषु विभिन्नानि मतानि प्रतिपादितानि तथापि मूलतः सर्वत्रैव अद्वैतवादस्यैव पराकाष्ठा प्रतिभाति। इत्थं च सांख्यवेदान्तप्रतिपादितानां सृष्टिविषयकसि)न्तानां सम्यक् तुलनात्मकं विश्लेषणमेव प्रकृतनिबन्धस्य प्रयोजनीयत्वं विद्यते।'

---

1. सांख्यकारिका -9

सृष्टिनिरूपणक्रमे प्रथमतः सकलप्रपञ्चस्य निमित्तकारणम् उपादानकारणं च विविच्येते। सांख्यदर्शने प्रकृतिपुरुषयोः संयोगेन सृष्टिर्भवति। तत्र पुरुषस्य कैवल्यरूपप्रयोजनार्थं प्रकृतेश्च भोग्यत्वस्य दृश्यत्वस्य वा सिध्यर्थम् दर्शनेऽस्मिन् अनयोः प्रकृतिपुरुषयोः संयोगः भवति ततः सृष्टिः संजायते।

सांख्यदर्शनानुसारं केवलं प्रकृतिः स्वलक्ष्यं प्राप्तुं न शक्नोति न च पुरुषोऽपि प्रकृतिं विना स्वकीयं लक्ष्यं प्राप्तुं शक्नोति।[1] वस्तुतः अनयोः परस्परसंयोगेनैव सृष्टिविषयकं प्रयोजनं सिध्यतीति सांख्यकारिकायाम् ईश्वरकृष्णेन स्पष्टं निगदितम्–

**पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य।**
**पंग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः।।**[2]

परन्तु वेदान्तदर्शने किंचिद् वैषम्यं दरीदृश्यते। तत्र मूलतः निमित्तोपादानकारणत्वेन ब्रह्म एव स्वीक्रियते। 'यतो वा इमानि भूतानि जायन्ते', ''यस्मिन् प्रयत्यभिसंविशन्ति''[3] इत्याद्युपनिषद् वाक्ये ब्रह्म एव सृष्टेः उपादानकारणं सिध्यति। पुनः ''दैक्षत बहुस्याम् प्रजायेय'' इत्यादिवाक्यैः निमित्तकारणमपि ब्रह्म एव सिध्यति। अर्थात् यथा लूता तन्तुकार्यं प्रति स्वप्रधानतया निमित्तं भवति तथा स्वशरीरप्रधानतया उपादानं भवति वर्णितश्च –

**यथोऽर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोधयः सम्भावन्ति।**
**यथा सतः पुरुषात् केशलोमानि तथाक्षरात् सम्भवतीह विश्वम्।।**[4]

अतः परं निमित्तोपादानकारणनिरूपणानन्तरं सकलप्रपंचस्य सृष्टेः निरूपणं विधीयते। अस्मिन् क्रमे प्रसंगतः सांख्यप्रतिपादितप्रकृतिपुरुषयोः स्वरूपं विश्लिष्यते। मूलप्रकृतिरियम् अपरिमिता अव्यक्ता, स्वतन्त्रा, त्रिगुणात्मिका विश्वसृष्टिक्षमा विद्यते। इयम् सत्त्वरजस्तमसां साम्यावस्था वर्त्तते। सृष्टौ प्रकृतिरूपकारणात् समस्तविश्वं विभक्तमिव प्रतीयते। परन्तु प्रलयावस्थायां समस्तविश्वम् अस्यामेव मूलप्रकृतौ विलीयते। तदा समस्तविश्वम् प्रकृतिरूपकारणात् अविभक्तमिव प्रतिभाति। पुनः सांख्यदर्शनानुसारं यावन्तः सन्ति सावयवाः संघातात्मकाश्च पदार्थाः ते सर्वे परार्थाः एव सिध्यन्ति। स एव परः प्रकृत्यतिरिक्तः पुरुषः विद्यते। एतादृशस्य पुरुषस्य कैवल्यस्य प्रयोजनार्थमेव त्रिगुणात्मकं समस्तविश्वं प्रवर्त्तते। वस्तुतः मूलप्रकृतेः त्रिगुणत्वस्य सिद्धान्तः सांख्यदर्शनस्य मौलिकं चिन्तनं वर्त्तते। चिन्तनमिदं सूक्ष्मं वैज्ञानिकंचेति सर्वथा स्वीकर्तुं शक्यते।

शंकराचार्येण वेदान्तदर्शनस्य प्रतिष्ठापितमेतन्मतं विवर्त्तवादे आधृतं विद्यते। मतमिदं वेदान्तदर्शनस्य सर्वोत्कृष्टं सर्वव्यापकञ्च स्वीक्रियते। एतन्मतानुसारं ब्रह्म एव जीवो विद्यते तथा समस्तप्रपंचः अस्य

1. सांख्यकारिका –9
2. सांख्यकारिका –21
3. तैत्तिरीयोपनिषद् बल्ली–3 , अनुवाक –1
4. मुण्डकोपनिषद् –1/1/7

ब्रह्मणः अज्ञानता अथवा माया विद्यते। अर्थात् सम्पूर्णजगत् ब्रह्मणः विवर्तमात्रमेव तिष्ठति। यथा सर्पः रज्जोः विवर्त्तः तथैव जगदपि ब्रह्मणः विवर्त्त एव। अस्य ब्रह्मणः अज्ञानशक्तिः द्विविधा विद्यते- आवरणशक्तिः विक्षेपशक्तिश्चेति। अज्ञानम् आवरणशाक्त्या वस्तुतः स्वरूपमावृणोति विक्षेपशक्त्या च तस्मिन् आवृत्तवस्तुनि अवस्तुनः आकाशादिप्रपंचस्य सृष्टिं विदधाति।[1]

वेदान्तदर्शनस्य सिद्धान्तेषु रामानुजेन प्रतिपादितं विशिष्टाद्वैतमतं महत्त्वपूर्णं विद्यते, अतएव सृष्टिविश्लेषणक्रमे अस्यापि विवेचनं प्रासंगिकं प्रतिभाति। अद्वैतवादः विवर्त्तवादे प्रतिष्ठापितो विद्यते परन्तु विशिष्टाद्वैतवादः परिणामवादे प्रतिष्ठापितो वर्त्तते। विशिष्टाद्वैतस्य परिणामवादानुसारं यथा कारणं सत् विद्यते तथैव कार्यमपि सदैव सिध्यति। अर्थात् रामानुजस्य मतानुसारं ब्रह्मणां सृष्टिः समस्तजगत्प्रपंचोऽपि सत्य एव विद्यते। कार्यप्रपंचोऽपि ब्रह्मणः परिणाममेव। अतएव व्यष्टिरूपेण समष्टिरूपेण वा जगदिदं सत्यं सिध्यति।[2]

सांख्यदर्शनानुसारमिव मूलप्रकृतेः सृष्टिः रामानुजेनापि स्वीक्रियते परन्तु अनयोः पार्थक्यमिदमेव वर्त्तते यत् सांख्यदर्शने मूलप्रकृतिः स्वतन्त्रा विद्यते परन्तु विशिष्टाद्वैतानुसारम् मूलप्रकृतिः ब्रह्मणः एकः अंशो विद्यते। तस्य ब्रह्मणः इच्छानुसारमेव प्रलयकाले मूलप्रकृतेः त्रिगुणत्वस्य या साम्यावस्था विद्यते सा सृष्टेः प्रारम्भे वैषम्यावस्थायां परिणमते। फलतः गुणवैषम्यात् वैषम्यावस्थायां विद्यमानप्रकृतेः महदादिक्रमेण चराचरसंसारस्य सृष्टिः संजायते। अतएव भगवता श्रीकृष्णेन भणितम्- ''मयाध्यक्षेण प्रकृतिः सूयते स चराचरम्''[3] अनेन प्रकारेण विशिष्टाद्वैतानुसारं सृष्टिः सत्ख्यातिवादम् आधृता विद्यते।

पुनः मध्वाचार्येण प्रतिपादितद्वैतदर्शनानुसारं सृष्टेः उपादानकारणं प्रकृतिः विद्यते निमित्तकारणं ईश्वरः वर्त्तते। प्रकृतिरियं त्रिगुणात्मिका विद्यते। पुनः अस्या त्रिगुणात्मकप्रकृतेः समस्तविश्वस्य सृष्टिः महदादिक्रमेण सांख्यदर्शनानुसारमेव भवति। अतएव सांख्यप्रतिपादितद्वैताद्वैतमतानुसारमपि त्रिगुणात्मकप्रकृतेः एव सकलप्रपञ्चस्य सृष्टिः सञ्जायते। अत्रापि गुणवैषम्यात् साम्यावस्थायां परिणमते। फलतः महदादिक्रमेण सृष्टिः प्रारभते। इत्थं द्वैताद्वैतमतानुसारमपि सृष्टिक्रमः प्रायः सांख्यदर्शनानुसारमेव प्रतिभाति।

बल्लभाचार्यणप्रतिपादितशुद्धाद्वैतमतानुसारं परमात्मनः इच्छया एव त्रिगुणात्मकप्रकृतेः समस्तविश्वस्य सृष्टिः सञ्जायते। सृष्टिनिरूपणं प्रायः सांख्यदर्शनानुसारमेव विद्यते। किन्तु अनयोः किंचिद् वैषम्यं विद्यते। बल्लभाचार्यप्रतिपादितपरिणामवादः अविकृतकोटिकः विद्यते परन्तु सांख्यप्रतिपादितः परिणामवादः विकृतपरिणामवादः प्रतिभाति। अनेनैव प्रकारेण भाष्कराचार्यप्रतिपादितसृष्टिविषयकः

---

1. वेदान्तसारः-15
2. रामानुजाचार्य का दर्शनम् -पृ0 30
3. गीता -9/10

सिद्धान्तः स्वतः परिणामवादे प्रतिष्ठापितः विद्यते। अतएव निगदितम्–

**ब्रह्म स्वत एव परिणमते तत्स्वाभाव्यात् यथा।**
**क्षीरं दधिभावाय अम्भो हिमभावाय।।**[1]

अतः परं सांख्यवेदान्तयोः संक्षेपतः सृष्टिनिरूपणपुरः सरम् अनयोः सृष्टिविषयकं तुलनात्मकं विश्लेषणं विधीयते।

सांख्यदर्शनानुसारं त्रिगुणात्मिकाप्रकृतेः द्विविधावस्था भवति–अव्यक्तावस्था व्यक्तावस्था चेति। तत्र सत्त्वरजस्तमांसि इत्येते गुणाः यदा अन्तर्मुखत्वेन वर्त्तन्ते तदा साम्यावस्था भवति पुनः पुरुषस्य सम्पर्केण यदा एते त्रयो गुणाः बहिर्मुखिनः सञ्जायन्ते तदा तेषु गुणवैषम्यात् परम्परम् आकर्षणविकषणयोः प्रक्रिया प्रारभते ऽलतः सृष्टिः सञ्जायन्तेः–

**रागविरागयोर्योगः सृष्टिः**[2]

अस्मिन् क्रमे कदाचित् सत्त्वगुणस्य प्राबल्यं भवति, कदाचित् रजोगुणस्य कदाचिच्च तमोगुणस्य प्राधान्यं भवति। सत्त्वगुणस्य प्रधान्येन महत्तत्त्वमाविभर्वति पुनः यदा महत्तत्वेऽस्मिन् तमोगुणस्य प्राबल्यं भवति तदा अहंकारः आविर्भवति। अस्मादहंकारात् क्रमशः एकादशेन्द्रियाणि पंचतन्मात्राणि चाविर्भवन्ति। आभिः पंचतन्मात्राभिः पंचभूतानि आविर्भवन्ति। अनेनैव प्रकारेण ''सांख्यप्रवचनसूत्रेऽपि'' सृष्टिप्रक्रियायाः उल्लेखो विहितः–

''सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः प्रकृतेर्महान् महतोऽहंकारोऽहंकारात् पंचतन्मात्राणि उभयमिन्द्रियं तन्मात्रेभ्यः स्थूलाभूतानि–''[3]

इत्थं च, सत्कार्यवादे प्रतिष्ठापितस्य सांख्यप्रतिपादितसृष्टेः आविर्भाव स्तद्विलोमक्रमेण तिरोभावस्य च क्रमोऽयं वर्त्तते।

वेदान्तदर्शनानुसारम् तमोगुणप्रधानविक्षेपशक्ति विशिष्टचैतन्यात् सूक्ष्माकाशोत्पद्यते, आकाशाद्वायुरूत्पद्यते, वायोरग्निरुत्पद्यते, अग्नेरापः उत्पद्यते अद्भ्यश्च पृथिवी उत्पद्यते। अस्य समर्थनं तैत्तिरीयोपनिषदि अपि विहितम्–

**तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः**[4]

वेदान्तदर्शनस्य 'सृष्टिविषयकं वैशिष्ट्यं पंचीकरणं विद्यते। अर्थात् आकाशादिसूक्ष्मभूतेभ्यः स्थूलभूतानि पंचीकरणप्रक्रियया उत्पद्यन्ते। अस्यां पंचीकरणप्रक्रियायां प्रत्येकभूतस्य अर्धांशः भवति

---

1. भास्कर भाष्य –2/1/24
2. तत्वकौमुदी का0 5
3. सांख्यप्रबन्धन भाष्य–1/6
4. वेदान्तसार पृ0 28

तथा अवशिष्टानां चतुर्णां भूतानाम् अष्टमांशः भवति।' अनेन प्रकारेण स्थूलभूतानि पंचीकृतानि संजायन्ते।[1]

निष्कर्षतः सांख्यवेदान्तदर्शनयोः सृष्टिविषयकतुलनात्मकविश्लेषणेन तथ्यानि इमानि समायान्ति यत् सांख्यदर्शनम् मूलतः द्वैतवादि विद्यते परन्तु वेदान्तदर्शनम् मूलतः अद्वैतवादि विद्यते। एकतः सांख्यदर्शनम् परिणामवादे प्रतिष्ठापितं विद्यते तु अन्यतः वेदान्तदर्शनम् कुत्रचित् विवर्तवादे कुत्रचिच्च अविकृतपरिणामवादे प्रतिष्ठापितं प्रतिभाति। तात्पर्यमिदमस्ति यत् सांख्यदर्शने सत्कार्यवादस्य द्वैतवादस्य च प्राधान्यं विद्यते परन्तु वेदान्तदर्शने विवर्त्तवादस्य अद्वैतवादस्य च प्राबल्यं दरीदृश्यते। पुनः पंचीकरणप्रक्रिया वेदान्तदर्शनस्य मौलिकं तथ्यं विद्यते। एतदतिरिक्तम् सांख्यदर्शनानुसारं निमित्तकारणम् अज्ञानं वर्त्तते तथा उपादानकारणं मूलप्रकृतिर्विद्यते परन्तु वेदान्तदर्शनानुसारम् ब्रह्म एव निमित्तोपादानकारणत्वेन स्वीक्रियते। अतएव सांख्यप्रतिपादितसृष्टिनिरूपणं मूलतः वैज्ञानिकं विद्यते किन्तु वेदान्तप्रतिपादितसृष्टि-निरूपणं मूलतः आध्यात्मिकं प्रतिभातीति शम्।

1. पञ्चीकरणवार्तिकम् –2/10

# न्यायनये हेत्वाभासस्वरूपम्

**डॉ. दीपककुमारद्विवेदी**

हेत्वाभासस्यार्थः हेतोः आभासः। अस्य शब्दस्य व्युत्पत्तिर्द्विधा कर्तुं शक्यते- ''आभासते इति आभासः'', 'हेतोराभासः हेत्वाभासः'' एवं निर्वचनकारणेन हेत्वाभासपदेन अनैकान्तिकासिद्धादिहेत्वाभासानां ग्रहणं भवति। द्वितीया व्युत्पत्तिः-हेतुवद् आभासते इति हेत्वाभासः। अर्थात् ये हेतुरिव प्रतीयन्ते किन्तु यथार्थरूपेण हेतुलक्षणेन रहितास्ते हेत्वाभासपदेन कथ्यन्ते। एतद् व्युत्पत्त्यनुसारं दुष्टहेतु एव हेत्वाभासः।

एतावता यस्तावत् सद्हेतुभिन्नः सन् पक्षसत्त्वादि गुणविरहितोऽपि सद्हेतुवत् प्रतीतिविषयो भवति स एव हेत्वाभासः इति बोध्यम्। अत एव गागाभट्टा भाट्टचिन्तामणिग्रन्थे अनुमितिकारणीभूताभावप्रतियोगी यथार्थज्ञानप्रकारको हेतुनिष्ठदोषो हेत्वाभासः अथवा तादृशप्रमाविषयत्वं हेत्वाभासत्वमिति निरूपयन्ति[1]।

**हेत्वाभासस्य सामान्यलक्षणम्**-न्यायसूत्रे गौतममुनिर्हेत्वाभासस्य लक्षणमनुक्त्वा केवलं विभागं कृतवान्[2]। वात्स्यायनेन न्यायभाष्ये व्युत्पत्तिलभ्यलक्षणस्यैव हेत्वाभासस्य लक्षणत्वेन संसाधनं कृतम्।[3] तथाहि- ''हेतुलक्षणाभावादहेतवो हेतुसामान्याद् हेतुवदाभासमानाः इति। अर्थात् साध्यव्याप्यत्वस्य अभावाद् हेत्वाभासा अहेतवो भवन्ति। वात्स्यायनस्य लक्षणमेव वाचस्पतिमिश्र[4]-जयन्तभट्ट[5]-भासर्वज्ञादयः[6] आचार्याः पूर्णतया स्वीकृतवन्तः। न्यायसिद्धान्तमुक्तावलीकारेण हेत्वाभासस्य लक्षणमुच्यते कणादमुनिः हेत्वाभासानां निरूपणं कुर्वन् हेत्वाभासस्य सामान्यलक्षणमपि प्रस्तुतवान्।

उपर्युक्तं सर्वमेव हेत्वाभासानां सामान्यलक्षणम्। हेत्वाभासस्य विशेषलक्षणस्य सन्दर्भे हेत्वाभासानां सर्वप्रथमो विवेचनकारः कणादमुनिः। सः अप्रसिद्धः, असन्, सन्दिग्धश्चेति त्रयो हेत्वाभासाः सन्तीति उल्लिखितवान्।[7]

---

1. भट्टचिन्तामणिः पृ.31
2. सव्यभिचारविरूद्धप्रकरणसमसाध्यसमकालातीता हेत्वाभासाः। न्या.सू. 1/2/4
3. हेतुलक्षणाभावादहेतवोहेतुसामान्यवदभासमानाः। न्या.भा.पृ.72
4. न्या.वा.ता.टी. पृ.363
5. न्या.म. पृ.174
6. न्या.सू. पृ.86
7. अप्रसिद्ध पूर्वकत्वादपदेशस्य। वै.सू. 3/1/14

**हेत्वाभासस्य भेदाः**

**मीमांसामतम्-** मीमांसासूत्रेषु शाबरभाष्ये च हेत्वाभासानां वर्णनं नोपलभ्यते। अस्य स्पष्टं विवेचनं कुमारिलप्रभाकरौ विहितवन्तौ। पश्चादपि सर्वेषु मीमांसाग्रन्थेषु न्यूनाधिकरूपेण हेत्वाभासविवेचनमुपलभ्यते। कुमारिलस्य हेत्वाभासविवेचनेन ज्ञातं भवति यत् तेन त्रयो हेत्वाभासाः स्वीकृताः। (1) असिद्धः (2) अनैकान्तिकः (3) बाधकश्चेति एवं संभवत अत एव मन्यते यतो हि मीमांसादर्शनेऽनुमानस्यावयवा अपि इमे त्रय एव हेत्वाभासाः भवन्तीति। पार्थसारथिमिश्रः[1], चिन्नस्वामी[2] च इमे स्वीकृतवन्तौ। किन्तु नारायणभट्टः प्रशस्तपाद इवासाधारणनामकं चतुर्थं हेत्वाभासमपि स्वीकरोति।[3] गागाभट्टेन कुमारिलभट्टेन च त्रय एव हेत्वाभासा अङ्गीकृताः, असिद्धनामकं हेत्वाभासं मीमांसकाः प्रथमस्थाने स्थापयन्ति, नैयायिकानां नये त्वयं हेत्वाभासः चतुर्थस्थानमलङ्करोति। मीमांसासम्प्रदाये प्रभाकरमतानुयायिना शालिकनाथेन हेत्वाभासानां निश्चितसंख्यायाः निर्देशो न कृतः तस्य विवेचनेन ज्ञायते यदेतेषां मतेऽसाधारणबाधकसाधारणासिद्धाश्चत्वारो हेत्वाभासा एव अभीष्टाः।

**न्यायमतम्**-न्यायसूत्रकारेण महर्षिगौतमेन पञ्च हेत्वाभासाः ''सव्यभिचारविरुद्धप्रकरण-समसाध्यसमकालातीता हेत्वाभासाः''[4] इत्येवं वर्णिताः। कणादाभिमतस्य सन्दिग्धहेत्वाभासस्यैव गौतमेन सव्यभिचार इति नाम प्रदत्तम्। भासवर्ज्ञातिरिक्ता उत्तरवर्तिनः सर्वे नैयायिका एतान् पञ्चहेत्वाभासान् स्वीकृतवन्तः। भासर्वज्ञेन पञ्चातिरिक्तः अनध्यवसितनामकः षष्ठो हेत्वाभासोऽपि स्वीकृतः।[5] वरदराजमतानुसारेण केचन नैयायिका अप्रयोजकनामकषष्ठो हेत्वाभास इति मन्वते[6]।

अन्नंभट्टेनापि पञ्च एव हेत्वाभासाः स्वीक्रियन्ते- ''सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्चहेत्वाभासाः सन्ति[7]।'' गौतमस्य प्रकरणसममेव अन्नंभट्टेन सत्प्रतिपक्ष नाम्ना उच्यते। तर्कभाषाकारेण केशवमिश्रेण च ''ते असिद्धविरुद्धानैकान्तिकप्रकरणसमकालात्ययापदिष्टभेदात् पञ्चैव''[8] इति ज्ञायते। कारिकावलीकारेण हेत्वाभासस्य निरूपणमित्थं कृतम्-

**अनैकान्तो विरुद्धश्चाप्यसिद्धः प्रतिपक्षितः।**
**कालात्ययापदिष्टश्च हेत्वाभासास्तु पञ्चधा।।**[9]

---

1. असिद्धः अनैकान्तिकत्वम् बाधकत्वम् चेति त्रयो हेतुदोषाः। शास्त्रदीपिका पृ.120
2. असिद्धरनैकान्तिककत्वं बाधात्वञ्चेति त्रयो हेत्वाभासाः । त.सि.रक्षिका पृ. 61
3. असिद्धोविरुद्धोऽनैकान्तिकोऽसाधारणश्चेति चत्वारस्तदाभासाः। मान.मे.पृ. 75
4. न्या.सू. 1/2/4
5. न्या.भू. पृ.308
6. अप्रयोजकषष्ठ इति केचित् । ता. रक्षा.पृ.231
7. त.सं. पृ.206
8. त.भा. पृ.116
9. का.का.72

गौतमेन वर्णितस्य हेत्वाभासस्य परवर्तिभिर्नैयायिकैः पृथक् एव नाम स्वीकृतं तद्-

| **गौतमः** | **तर्कभाषाकारः** | **तर्कसंग्रहकारः** |
|---|---|---|
| सव्यभिचारः | अनैकान्तिकः | सव्यभिचारः |
| विरुद्धः | विरुद्धः | विरुद्धः |
| प्रकरणसमः | सत्प्रतिपक्षः | सत्प्रतिपक्षः |
| साध्यसमः | असिद्धः | असिद्धः |
| कालातीतः | बाधितविषयः | बाधितविषयः |

**(1) असिद्धः**:- ''लिङ्गत्वेनानिश्चितो हेतुः असिद्धः'' इत्याधारेण हेतौ लिङ्गत्वं व्याप्तिः पक्षधर्मता चानिश्चिता स असिद्धः। गौतमेन ''असिद्ध'' इति नाम नोल्लिखितम्, किन्तु साध्यसमनामकहेतोर्व्याख्यानावसरे वात्स्यायनभाष्यस्य व्याख्यां कुर्वता वार्तिककारेण त्रयो भेदा असिद्धस्य कृताः-स्वरूपासिद्धि,ः आश्रयासिद्धिः, अन्यथासिद्धिश्चेति।

शास्त्रदीपिकायां पार्थसारथिमिश्रेणासिद्धस्य पञ्चभेदा दर्शिताः स्वरूपासिद्धि-सम्बन्ध सिद्धि-व्यतिरेकासिद्धि-आश्रयसिद्धि-व्याप्त्यसिद्धिभेदात्। कुमारिलभटटेनापि उपर्युक्तपञ्चभेदाः स्वीकृताः। प्रमाणलक्षणे सर्वज्ञात्ममुनिः असिद्धस्य द्वादशभेदान् कृतवान् - (1) स्वरूपासिद्धः (2) अधि करणासिद्धः (3) विशेषणासिद्धः (4) विशेष्यासिद्धः (5) भागासिद्धः (6) आश्रयासिद्धः (7) आश्रयैकदेशासिद्धः (8) व्यर्थविशेषणासिद्धः (9) व्यर्थविशेष्यासिद्धः (10) सन्दिग्धविशेष्यासिद्धः (11) सन्दिग्धविशेषणासिद्धः (12) ऐतिह्यासिद्धान्यश्चेति। भासर्वज्ञेन एषां द्वादशभेदानां विवेचनानन्तरमुभयबाधसिद्धान्यतरबाधसिद्धयोर्हेत्वाभासयोरुल्लेखमात्रं कृतम्। तर्कभाषाकारेण त्रयो भेदाः ''तत्रासिद्धस्त्रिविधः आश्रयासिद्धः स्वरूपासिद्धो व्याप्यत्वासिद्धश्चेति'' रीत्या स्वीकृताः।

**(1) आश्रयासिद्धः**:- यस्य हेतोः पक्षो न सिद्धः स आश्रयासिद्धः यथा- गगनारविन्दं सुरभि, अरविन्दत्वात्, सरोजारविन्दवत् इत्यत्र।

**(2) स्वरूपासिद्धः**:- यो हेतुराश्रये पक्षे स्वस्वरूपेण न सिद्धः अर्थात् यस्य हेतोः पक्षे अभावः यथा- शब्दोऽनित्यश्चाक्षुषत्वाद् घटवत्।

**(3) व्याप्यत्वासिद्धः**:- यस्मिन् हेतौ व्याप्तिर्न सिद्धा स व्याप्यत्वासिद्धः। व्याप्यत्वस्य अर्थात् व्याप्तेः असिद्धौ कारणद्वयम् प्रथमं व्याप्तिग्राहकप्रमाणात्मकम् अपरं तूपाधि सदावस्वरूपम्।

**2-विरुद्धः**:- महर्षिगौतमेन सिद्धान्तस्य विरोधीहेतुः विरुद्धनाम्ना सूत्रे प्रोक्तः- **''सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः**[1]''। जयन्तभट्टोऽपि एतादृशमेव विचारं प्रकाशयति यो हेतुः

1. न्या. सू. 1/2/6

साध्यनिश्चयार्थमुद्दिष्टसाध्यस्य साधको न, अपितु विरोधी भवति स एव विरुद्धहेत्वाभास:[1]। जयन्तभट्टोऽस्यातिरिक्तमेकमन्यं लक्षणमुक्तवान् य: सपक्षे न तिष्ठति विपक्षे च वसति एवं स्वसाध्यविपरीतार्थस्य साधको यो हेतु: स विरुद्ध:। जयन्तभट्टकृतस्य द्वितीयलक्षणस्य समर्थनं कुर्वन् भासर्वज्ञ: तं हेतु विरुद्धहेत्वाभासं मनुते य: सपक्षं विहाय पक्षविपक्षयोर्वसति[2]। गङ्गेशमते तु यो हेतु: साध्यव्यापकभावस्य प्रतियोगी भवति स विरुद्ध:। यथा जलाशयो वह्निमान् जलत्वादिति[3]। केशवमिश्रेण ''साध्यविपर्ययव्याप्तो हेतुर्विरुद्ध:[4]'' इति विरुद्धलक्षणविहितम्। यथा शब्दो नित्य: कृतकत्वात्।

**आचार्यबदरीनाथशुक्लमतम्**-विरुद्धहेत्वाभासोभ्य: सर्वेभ्यो हेत्वाभासेभ्यो निकृष्ट:, यतो हि अस्य प्रयोगेनानुमानप्रयोक्त: महती अशक्ता, अज्ञता वा सूचिता भवति। विरुद्धहेतो प्रयोगेण एतन्निर्धायते यत् तस्य पुरुषस्येदमपि ज्ञानं न भवति यत् स: यस्य हेतो: प्रयोगं करोति[5]। स: हेतु: साध्यं न साधयति प्रत्युत तद्विपरीतं साध्याभावमेव साधयतीति।

**(3) अनैकान्तिक:** - गौतमेन 'अनैकान्तिक: सव्यभिचार:'[6] अत्रानैकान्तिक: सव्यभि-चारनाम्ना प्रोक्त:। व्यभिचारशब्दस्यार्थो य एकस्मिन् स्थाने न तिष्ठति, व्यभिचारेण सह य: प्रवृत्त: स सव्यभिचार:।[7] गङ्गेशोपाध्यायेनास्य त्रिविधत्वं साधारणासाधारणानुपसंहारी भेदेन प्रतिष्ठापितम्। वैशेषिकसम्प्रदाये शङ्करमिश्रोऽपि व्यभिचारस्यास्य त्रैविध्यं स्वीकृतवान्। अन्नम्भट:[8], विश्वनाथादय:[9] नैयायिका अपि व्यभिचारं त्रिविध एव स्वीकृतवन्त:।

तर्कभाषाकारेण केशवमिश्रेण ''सव्यभिचारोऽनैकान्तिक:। स द्विविध: साधारणानैकान्तिकोऽसाधारणनैकान्तिकश्चेति।[10] एवमनैकान्तिकस्तावत् द्विविधमेव स्वीकृत:।

**आचार्यबदरीनाथशुक्लमतम्**- तर्कभाषाकारेणानैकान्तिकस्य भेदेषु सत्प्रतिपक्ष- नामकस्य हेत्वाभासस्य परिगणनं न कृतम्। यतो हि ते विश्वमात्रपक्षकमनुमानमसम्भाव्यं मन्वते। अस्य आशयोऽयं प्रतीयते यद् यदा कस्मिंश्चिद्धेतौ साध्यस्य व्याप्तिज्ञानं सम्भवति तदैवान्यत्र साध्यस्य साध

---

1. न्या. म. पृ.157-58
2. न्या.सा. पृ. 35
3. तत्त्व. चि.पृ.1776
4. त. भा. पृ.121
5. त. भा.व्या. पृ. 121
6. न्या.सू. 1/2/5
7. त.चि. पृ. 1639
8. त.सं.पृ 145
9. न्या.सू. वृ. पृ. 376
10. त. भा.पृ.121

नार्थमनुमानप्रयोगस्यावसर उपस्थापितो भवति। यदा सम्पूर्णं विश्वमेव पक्षकोटौ भविष्यति, सम्पूर्णं जगदेव साध्यसन्देहेनाक्रान्तं भविष्यति तदा कस्मिंश्चिदपि हेतौ साध्यनिरूपिताया व्याप्तेर्ज्ञानस्यासम्भावितत्वादनुमानस्य प्रयोगो न भवितुं शक्नोति, अत: श्रीकेशवमिश्रदृष्ट्या उपर्युक्तरीत्या अनुपसंहारिनामकस्य अनैकान्तिकस्य कल्पना बुद्धौ नाधिरोधति।

(4) **प्रकरणसम:**–यदा कस्यचिद् धातो: साध्यविपरीतार्थस्य साधकान्यो हेतु: विद्यमानो भवति तदा स हेतु: साध्यसाधनार्थं प्रयुक्त: प्रकरणसमो भवति। आचार्यबदरीनाथशुक्लमहोदयेन प्रकरणसमशब्दस्यार्थ: कृत:–साध्यसन्देहजनकसमानम् (प्रकरण = साधयसन्देहजनक:, सम = समानम्[1]) अस्य हेत्वाभासस्य न्यायसूत्रादिप्राचीनग्रन्थेषु 'प्रकरणसम:' नाम प्राप्यते, उत्तरकालीनन्यायवैशेषिकग्रन्थेषु सत्प्रतिपक्ष इति नाम्ना चास्यैव व्यवहारोपलभ्यते।

प्रकरणसम एव सत्प्रतिपक्ष इत्यपरनाम्नापि प्रख्यात:। ये तावत् साध्यसाधकानुमानयो: ससन्निध ाने सति साध्यसाध्याभावयो: संशयात्मिकानुमितिजननं मन्वते ते एवं विधेषु अनुमानेषु प्रयुक्तं हेतुमेव प्रकरणसमं नाम्ना कथयन्ति। ये च एतयोरनुमानयो: परस्परं प्रतिपक्षभावमभ्युपेत्य विरोधिवत्त्वं मत्वा द्वयोर्हेत्वोरनुमित्यात्मककार्येऽस्य प्रतिबन्धं स्वीकुर्वन्ति ते अनयोरनुमानयो: प्रयुक्तं हेतुं 'सत्प्रतिपक्ष' पदेन व्यपदिशन्ति।[2]

(5) **कालात्ययापदिष्ट:** –''पक्षे प्रमाणान्तरावधृतसाध्याभावो हेतुर्बाधितविषय: कालात्यापदिष्ट इति चोच्यते[3] इति केशवमिश्रेण व्याख्या कृता। कालात्ययेन युक्तो यस्यार्थस्यैकदेशोपदिश्यमानस्य स कालात्ययापदिष्ट: कालातीत:। यस्यार्थस्य एकदेशकाले ध्वंसेन संयुक्त: स कालातीत: इति गौतमेन प्रतिपादितम्।[4] आचार्यै: शुक्लवर्यै: कालात्ययापदिष्टस्यार्थ:[5] ''उचितकालस्य अत्यये अर्थात् अतिक्रमणे सति अपदिष्ट: अर्थात् प्रयुक्तो हेतु:'' इति स्वीकृतम्।

1. त भा. व्या. पृ.122
2. तत्रैव पृ.123
3. त. भा. पृ.124
4. कालात्ययापदिष्ट: कालातीत:। न्या.सू. 1/2/9
5. त.भा. व्या.पृ.123

# ज्योतिर्विज्ञानानुसारेणायुर्निर्णयसमीक्षा

**श्रीरतीशकुमारझा**

भारतीयसभ्यतायाः संस्कृतेश्च मूलाधारा वेदा एव सन्ति। स्वरूपभेदात् वेदाः त्रयः सन्ति। संहिताभेदाच्च चत्वारो वेदाः प्रख्याताः सन्ति। वेदानां विषये भगवता मनुना प्रोक्तं "**सर्वज्ञानमयो हि सः**"[1] इत्यर्थात् वेदेषु सर्वविधानि ज्ञान-विज्ञानानि विस्तृतेण वर्णितानि सन्ति। वेदानां षडङ्गानि उक्तानि, तानि यथा-

**छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।**
**ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते॥**
**शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।**
**तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते॥**[2]

वेदानां षडङ्गेषु ज्योतिषं चक्षुरूपाङ्गत्वेन वर्णितमस्ति। लोके चक्षुषा सर्वविधवस्तुदर्शनं कृत्वा तस्य आकार-प्रकाररूपस्थित्यादीनां सूक्ष्मातिसूक्ष्मरूपेण प्रत्यक्षज्ञानं क्रियते। किन्तु ज्योतिषशास्त्रेण ग्रहस्थितिमाध्यमेन वस्तुस्थित्यादीनां ज्ञानं प्रत्यक्षपरोक्षरूपेण विधीयते। ज्योतिषशास्त्रं त्रिषु स्कन्धेषु विभक्तमस्ति। सिद्धान्तः, होरा, संहिता चेति त्रयः स्कन्धाः विद्वद्भिः कथिताः। तेषु स्कन्धेषु होरास्कन्धः आयुषः परिशीलने मुख्यतमः। आयुषो लक्षणं आयुर्वेदशास्त्रे इत्थं प्रदत्तम्-

**शरीरेन्द्रियसत्त्वात्मसंयोगो धारिजीवितम्।**
**नित्यश्चानुबन्धश्च पर्यायैरायुरुच्यते।**[3]**॥**

प्रकृतौ येऽपि जीवाः चरात्मका अचरात्मकाश्च सन्ति, तेषां स्थितिः आयुराश्रित्यैव भवति। अमूं विना न तेषां भूत-वर्तमान-भविष्यादिविषयकज्ञानं सम्यक्तया कर्तुं शक्यते। एतत्सर्वस्मात् विचारणात् प्राक् आयुषो विचारः परमावश्यको भवति। एतस्मादेव कारणात् ज्योतिषशास्त्रे होरास्कन्धान्तर्गतम् आयुस्साधनमिति प्रकल्पमस्माकम् ऋषिभिः भृशं प्रपञ्चितम्।

---

1. मनुस्मृतौ- 2.7
2. पाणिनीयशिक्षायाम्। श्लो.- 41,42 ।
3. चरकसूत्र- 01.44

ज्योतिषशास्त्रस्य मतानुसारेण जन्मजन्मान्तरस्य शुभाशुभं कर्मफलानुसारेण अस्मिन् जन्मन्येव भोग्यमर्हति। तस्य भोग्यफलावधि आयुरित्युच्यते। सामान्यतया च जन्मकालात् मृत्युपर्यन्तं समयावधिज्ञानम् आयुः कथ्यते।

वेदानुसारेण– ''पश्येम शरदः शतं जीवेम शरदः शतं श्रृणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात्।''[1] इति मन्त्रेण सुखपूर्वकं शतायुषः परिकल्पना कृता।

भारतीयदर्शनान्तर्गतं पुरुषार्थचतुष्टयं निगद्यते। तस्य मुख्योद्देश्यं यन्मनुष्यः स्वस्थदीर्घायुः प्राप्नुयात्। तस्मात्कारणात् चरकसंहितायां प्रथमं 'दीर्घञ्जीवितीयाध्यायः' नाम प्रथमाध्याय उद्धृतोऽस्ति।

आयुर्वेदेऽपि शतं वर्षीयुषः प्राप्तये सूत्रमिदं निगद्यते। यथा–

**वामशायी द्विभुञ्जानः षण्मूत्री द्विपुरीषकः।**
**स्वल्पमैथुनकारी च शतवर्षाणि जीवति।।**[2]

अतः जगति स्वायुर्विषयज्ञानार्थं सर्वैः विचिन्तनीयम्। ममायुः कति वर्षाणि? कदा पीडा भविष्यति? कदा मृत्युः भविष्यति? अस्य प्रश्नोत्तरं कस्यापि वैद्यस्य वैज्ञानिकस्य दार्शनिकस्य च पार्श्वे नास्ति। तस्मात् आयुर्विचारः ज्योतिषशास्त्र एव भवितुं शक्यते न तु अन्यत्र।

भारतीयशास्त्रपरम्परायां ज्योतिषशास्त्रे आयुर्निर्णयः विभिन्नप्रकारैः कृतः। ज्योतिषशास्त्रेऽस्मिन्विषयेऽस्माकं महर्षीणां प्रभावपूर्णं चिन्तनं दृश्यते। फलितशास्त्रान्तर्गतम् आयुर्ज्ञानम् प्राणभूतत्वेन स्वीक्रियते। प्रश्नमार्गे आयुर्निर्णयो योगदशाभ्यां द्विधा कृतः। विभिन्नयोगैः कृतः निर्णयः योगायुः मारकेशादीनां ग्रहाणां दशान्तर्दशामाध्यमेन च कृतः। निर्णयो दशायुः कथितः।[3]

**योगायुश्च दशायुश्चेत्यायुर्वै द्विविधं नृणाम्।**
**योगोक्तमायुर्योगायुर्दशायुश्च दशाकृतम्।।**[4]

प्रश्नमार्गे आयुर्द्विविधं प्रोक्तम्– योगायुर्दशायुश्चेति। योगोक्तमायुः योगायुः दशयोक्तमायुः च दशायुः, प्रश्नमार्गे योगायुषः षड्भेदाः कथिताः (क) सद्योरिष्टयोगः, (ख) अरिष्टयोगः, (ग) रिष्टयोगः (अल्पायुर्योगः), (घ) मध्यमायुर्योगः, (ङ) दीर्घायुर्योगः, (च) अमितायुर्योगः।

**योगायुः षड्विधं योगैः षड्विधैस्तान् वदाम्यथ।**
**सद्योरिष्ट अरिष्टख्या योगारिष्टाह्वयास्तथा।।**[5]

1. यजुर्वेदः– 36.24
2. चरकसूत्रम्– 27.348
3. प्रश्नमार्गः श्लो.– 45
4. प्रश्नमार्गे अ. 9, श्लोकः– 53
5. तत्रैव श्लो. सं.– 54

**मध्यदीर्घामितायुर्दा इति योगास्तु षड्विधाः।**

**सद्योरिष्टाह्वया योगा वत्सरान्तर्मृतिप्रदाः॥[1]**

सद्योरिष्टयोगे वर्षान्तमायुर्भवति, अरिष्टयोगे द्वादशवर्षपर्यन्तं, रिष्टयोगे अल्पायुर्योगे वा द्वात्रिंशत् वर्षपर्यन्तम्, मध्यमायुर्योगे सप्ततिवर्षपर्यन्तम्, दीर्घायुर्योगे शतवर्षपर्यन्तम्, अमितायुर्योगे च शतवर्षाधिकमायुर्भवति।

**रव्यब्दान्तररिष्टाख्या नापेक्षन्ते दशामिमे।**

**योगारिष्टाह्वयाषष्ठिवत्सरान्तर्मृतिप्रदाः ॥**

**अब्दानां सप्ततेरन्तर्योगा ये मध्यमायुषः।**

**दीर्घायुषश्शतस्यान्तर्दशापेक्षान्वितास्त्रयः॥**

**शताधिकसमा जीवेद्योगे जातोमितायुषि।**

**आयुर्दायविधिं योगा नापेक्षन्तेऽमितायुषः॥[2]**

जातकपारिजाते अष्टवर्षपर्यन्तं बालारिष्टम्, विंशतिवर्षपर्यन्तं योगारिष्टम्, द्वात्रिंशत्वर्षपर्यन्तमल्पायुः, सप्ततिवर्षपर्यन्तं मध्यमायुः शतवर्षपर्यन्तं पूर्णायुः, शतवर्षाधिकं च परमायुः कथितम्, यथोक्तम्–

**अष्टौ बालारिष्टमादौ नराणां योगारिष्टं प्राहुराविंशतिः स्यात्।**

**अल्पं चाद्वात्रिंशतान्मध्यमायुरासप्तत्याः पूर्णमायुः शतान्तम्॥[3]**

अनेन प्रकारेण विभिन्नाचार्यैः योगवशात् ग्रहाणां विभिन्नस्थितिवशात् च विभिन्नप्रकारेण आयुषः निर्णयः कृतः।

पराशरादिभिः आचार्यैः आयुषोऽष्टभेदाः प्रतिपादिताः। निसर्गायुः, पिण्डायुः, लग्नायुः, अंशकायुः, रश्मिजायुः, चक्रायुः, नक्षत्रायुः, अष्टकवर्गजायुश्चेति, यथोक्तं जातकपारिजाते–

**निसर्गपैण्ड्यांशकरश्मिचक्रनक्षत्रदायाष्टकवर्गजानि ।**

**पराशराद्यैः कथितानि यानि संगृह्य तानि क्रमशः प्रवच्मि॥[4]**

कस्य आयुषः कदा ग्रहणं कर्तव्यमित्यस्मिन् विषये कथितम्, यत् सूर्ये बलोपेते, पिण्डायुषः, चन्द्रे निसर्गायुषः, भौमे अष्टकवर्गायुषः, बुधे रश्मिजायुषः, देवगुरौ नक्षत्रायुषः दशायुषो वा, शुक्रे

1. प्रश्नमार्गे अ. 9, श्लोकः– 55
2. तत्रैव श्लो. सं.– 56,57,58
3. जातकपारिजातः अरिष्टाध्यायः, श्लो. 3
4. जातकपारिजातः अथायुर्दायाध्यायः, श्लो. 1

चक्रायुष:, शनौ सामुदायायुष: लग्ने बलोपेते च अंशकायुष: ग्रहणं कर्तव्यम्। यथोक्तं जातकपारिजाते-

**पैण्डयं भानौ निसर्गप्रभवमुडुपतौ रश्मिजं सोमपुत्रे**
**भौमे भिन्नाष्टकवर्गोदितमसुरगुरो कालचक्रोद्भवायु:।**
**देवाचार्ये दशायुर्दिनकरतनये सामुदायं बलिष्ठे**
**लग्ने यद्यंशकायुर्भवति बलयुते चाहुराचार्यमुख्या:।।**[1]

पाराशरमतानुसारेण जन्मकुण्डल्यां तृतीयमष्टमं च स्थानं आयुस्स्थानं निगद्यते। उभयो: व्ययस्थाने द्वितीयसप्तमे मारकेशसंज्ञके भवत:। अल्पायु-मध्यायु-दीर्घायुषां विचार: जैमिनीये सूत्रे व्यापकरूपेण प्रतिपादितोऽस्ति। यथा-

1. आयु: पितृदिनेशाभ्याम्।
2. प्रथमयोरुत्तरयोर्वा दीर्घम्।
3. प्रथमद्वितीययोरन्तयोर्वा मध्यम्।
4. मध्ययोराद्यन्तयोर्वा हीनम्।[2]

उपर्युक्तं तथ्यं सरलतापूर्वकमधोभागे श्लोकनिबद्धमस्ति।

**चरे चरस्थिरद्वन्द्वा: स्थिरे द्वन्द्वचरस्थिरा:।**
**द्वन्द्वे स्थिरद्वन्द्वचरा दीर्घमध्याल्पका: क्रमात्।।**[3]

लघुपाराशरकारिकायां स्पष्टरूपेण दृश्यते-

**आदौ लग्नाष्टमेशाभ्यां योगमेकं विचिन्तयेत्।**
**जन्महोराविलग्नाभ्यां द्वितीयं परिचिन्तयेत्।।**
**तृतीयं शनिचन्द्राभ्यां चिन्तयेद् द्विजोत्तम:।**
**योगत्रयेण योगाभ्यां सिद्धं यद्ग्राह्यमेव तत्।।**
**योगत्रयविसम्वादे लग्न होरा विलग्नत:।**
**लग्ने वा सप्तगे चन्द्रे चिन्तयेन्मन्दचन्द्रत:।।**[4]

---

1. जातकपारिजात: अथायुर्दायाध्याय:, श्लो. 32,33
2. जैमिनिसूत्रे द्वितीयाध्याये प्रथमपादे सूत्रसं.- 1,2,3,4
3. जैमिनिसूत्रे द्वितीयाध्याये प्रथमपादे श्रीअच्युतानन्दझाकृतव्याख्यायां 91तमे पृष्ठे।
4. पाराशरकारिकायाम्- हरिशङ्करपाठककृतजातकपारिजातहिन्दीव्याख्यायामरिष्टाध्याये 185तमे पृष्ठे।

**अत्राऽयं निष्कर्षः**

मय-यवन-मणित्थ-शक्ति-जीवशर्मा-सत्याचार्य-वराहमिहिर-पराशरेत्यादिभिराचार्यैः निसर्गायुरंशायुः पिंडायुर्लग्नायुरित्यादीनां व्यापकरूपेण परिगणनं कृतम्। तदनन्तरमस्यामवस्थायामायुर्निर्णयः कथं भवेदित्यस्याः समस्यायास्समाधानं किमिति प्रसङ्गे आचार्यपराशरेण कथितम्- यदि जन्मकाले लग्नेशः बलवान् स्यात्तथा तस्योपरि शुभग्रहाणां दृष्टिरपि भवेत् तर्हि अंशायुर्विधिना आयुर्निर्णयः कर्तव्यः। यदि अर्को बलवान् भवति तर्हि पिण्डायुरितिमाध्यमेन आयुर्निर्णयः करणीयः। चन्द्रमा बलवान् भवति तर्हि निसर्गायुर्विचारणीयः। तथा च लग्नेशचन्द्रार्केषु यदि कावपि द्वौ ग्रहौ तुल्यबलिनौ स्यातां तर्हि द्वाभ्यामपि रीतिभ्यां स्पष्टीकृतायुषोर्योगार्धग्रहणं करणीयम्। यदि त्रयाणां ग्रहाणां तुल्यबलं प्राप्नोति तर्हि अंश-पिण्ड-निसर्गायुभिः यदायुर्लब्धं तस्य तृतीयांशं ग्रहणीयम्।

**मुने! यत्सम्प्रति मया त्रिविधं त्वायुरीरितम्।**
**तत्रादेयं कदा किञ्च विद्धिरेतद् ब्रवीम्यहम्।।**
**लग्नेशे भास्करे चेन्दौ सबले सौम्यवीक्षिते।**
**अंशायुश्चापि पिण्डायुनिसर्गायुः क्रमात् स्मृतम्।**
**उभयोर्बलतुल्यत्वे योगार्धं साधितायुषो।।**
**त्रयाणां तद्युतेस्त्र्यंशतुल्यमायुरुदीरितम्।।**[1]

इति।

1. बृ.पा.हो.शा. आयुर्दाध्यायः श्लोकसं.- 30,31,32

# सूर्यविज्ञानविमर्शः

**डॉ. शीतलाप्रसादशुक्लः**

सृ धातोः क्यचि प्रत्यये सूर्यस्य निष्पत्तिः भवति। सृ धातुः गत्यर्थे प्रयुज्यते। सूर्य आकाशे सततं गमनं करोत्यतः तस्य सूर्य इति नाम सार्थकम्।[1] निरुक्तकारः यास्काचार्यः सूर्यस्य त्रिविधं व्युत्पत्तिं करोति। सृ धातोः यतः सः सततं गमनशीलः सू धातोः यतः सः जगत्प्रेरयति सर्वे जीवधारिणः सूर्योदयादेव स्वे स्वे कार्ये प्रवर्तन्ते 'सु' उपसर्गपूर्वकं ईर् धातोः यतोहि स शोभनतया गमनं करोति।[2] सूर्यस्य गमनशीलतायाः प्रेरकस्वरूपस्य च प्रकाशनं भवति। वस्तुतः सूर्यः विविधरूपः वर्तते तस्य एकं स्थूलरूपम् आकाशमण्डले स्थित्वा निरन्तरं गच्छत् संसारस्य जनान् प्रेरयति। स सूक्ष्मरूपः सन् आत्मरूपो भूत्वा प्राणिनां जीवनानि प्रकाशयति। सूर्यस्य रूपस्य विषये ऋग्वेदे लिखितमस्ति–

**सूर्य आत्मा जगतस्तस्थुषश्च।।**[3]

ज्योतिषशास्त्रेऽपि सूर्यः आत्मतत्त्वस्य प्रतिनिधिः मन्यते यतोहि बृहत्पाराशरहोराशास्त्रे–[4]

**कालात्मा च दिवानाथो मनः कुमुदबान्धवः।**
**सत्त्वं कुजो विजानीयाद् बुधो वाणीप्रदायकः।।**

अस्यात्मरूपस्य सूर्यस्य विषये वेदवाणी वर्तते–

**मानः सूर्यस्य संदृशो युयोथाः।।**[5]

अर्थात् वयं कदापि सूर्यस्य प्रकाशात् वियुक्ताः न भवेम्।

सूर्यस्य स्थूलरूपं तु केवलं दृश्यमाने जगतिप्रकाशते परन्त्वस्य सूक्ष्मरूपं तत्रापि प्रकाशते यत्र न सूर्यः भाति न चन्द्रः न तारकः नाग्निः ।

**न तत्र सूर्यो भाति न चन्द्रतारकं**
**नेमा विद्युतो भान्ति कुतोऽयमग्निः।**

---

1. संस्कृत हिन्दी कोश वामनशिवराम आप्टे
2. निरुक्तम्–12/8
3. ऋग्वेदः 1/115/1
4. बृहत्पराशरहोराशास्त्रम्–3/1
5. ऋग्वेदः–2/33/1

**तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति।।**[1]

तेन प्रकाशेन वयं कदापि वियुक्ताः न भवेम् इति वेदवाणीरहस्यम्।

अनेन सूर्येण विना सृष्टिर्न संभवति सर्वदा सर्वथा च सूर्योऽयं तिष्ठति सृष्ट्युत्पादनकाले च प्रकाशते। ऋग्वेदे कथितं–

**सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्।।**[2]

सर्वेषु कल्पेषु सूर्यचन्द्रयोः अवस्थितिर्भवति। ईष्वरः विधााता वा पूर्वपूर्वकल्पवत् सूर्यस्य चन्द्रमसष्च निर्माणं करोति। अस्मिन् कल्पेऽपि तादृषी संस्थितिः। अत्र सूर्यः प्राणः चन्द्रश्च रयिः। स्त्रीषक्तिः रयिः कथ्यते। प्राणः रयि प्रकाषवान् भवति। स्थूलरूपेण चन्द्रस्य ज्योत्स्ना सूर्यस्य एव प्रकाशः। प्रश्नोपनिषदपि तथ्यस्या संपुष्टिं करोति–

**आदित्यो ह वै प्राणो रयिरेव चन्द्रमाः।**[3]

सृष्टिनिर्माणकाले ब्रह्मणः प्रथमाविष्कारः सूर्य एव अवर्तत। तेनैव सर्वत्र प्राणतत्त्वं संचरति। उक्तमपि–

**यत् सर्वं प्रकाशयति तेन सर्वान् प्राणान् रश्मिषु संनिधत्ते।।**[4]

प्राणं विना जीवनं कदापि न सम्भवति। दिव्यान्तरिक्षे हिरण्यगर्भसवितुः परोत्कृष्टतेज एवाधि देव हिरण्यमयपुरुषस्य सर्वव्यपिनिज्योतिः सर्वलोकान् प्रकाशते। तज्ज्योतिः प्राणिनां पाञ्चभौतिकशरीरे तिष्ठति यावदात्मा शरीरे तिष्ठति तावदपि तेजोऽपि तत्र तिष्ठति। सूर्यस्य तेजसा हृदयं दिव्यशक्तिपरिपूर्ण भवति।

**तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति।।**[5]

यदा हृदयस्थग्रांशोऽधिकं प्रद्योतते तदात्मा देहं परित्यज्य परलोकायोत्क्रमते। तत्र दिव्ययात्रायां जीवात्मा सूर्यमण्डलं यावत् सूर्यरश्मिभिः नाडीरश्मिभिश्च गमनक्षमः भवति।

**अथ यत्रैतदस्माच्छरीरादुत्क्रामयत्यथैतैरेव रश्मिभिरुर्ध्वमाक्रमते।।**[6]

नाडीरश्मिसम्बद्धः जीवात्मा परलोकं गच्छति। आदित्यानां मण्डलमेव परलोकः कथ्यते। आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः।[7]

1. श्रीमद्भगवद्गीता–15/6 कठोपनिषद–2/2/15 मुण्डकोपनिषद्–2/2/10
2. ऋग्वेदः10/110/3
3. प्रश्नोपनिषद्–1/5
4. प्रश्नोपनिषद्–501/16
5. बृहदारण्यकोपनिषद्–4/4/2
6. छान्दोग्योपनिषद्–8/6/2
7. छान्दोग्योपनिषद्–8/6/2

पराविद्यया भगवत्कृपया च मरणोपरान्तं मनुजा: मार्गेणानेन गच्छन्ति। हृदयं बहूनां नाडीनां योनि:। ब्रह्मनाडीरूपेण प्रसिद्धा सुषुम्णापि अत्रत एवोद्भवति या उर्ध्वगमनं करोति। अस्यामुत्क्रान्ता: प्राणा: अमृतत्वं प्राप्नुवन्ति। जीवात्मा मरणोपरान्तमनेन नाडीरश्मिमार्गेण सूर्यमण्डलं प्राप्य तत्र प्रतितिष्ठति। तत्र स: मनोमये सत्यसङ्कल्पे शरीरे निवसति। शरीरमिदं दिव्यं प्रज्ञामयं दिव्यरूप-रसशब्दस्पर्शगन्धयुक्तं भवति। तत्र स आत्मा दिव्यशरीरे स्थितो भूत्वा लोकोत्तरदिव्यभोगैश्वर्यं यथेच्छं भुङ्क्ते। तत्र सर्वा: विभूतय: सङ्कल्पसिद्धा: भवन्ति। तैत्तिरियोपनिषदि निदिष्टम्–

**''विज्ञानं कर्माणि तनुते।।**[1]

एष विज्ञानात्मा ज्योतिर्मयशरीरे निवसति। स अग्निमयतेजसि अधिष्ठित: स्वकार्यकलापे प्रवृत्त: भवति यथा कौषीतक्युपनिषदि कथितम् –

यथाग्नेर्ज्वलतो विस्फुलिङ्गा विप्रतिष्ठरेनेवमेवैतस्थादात्मन: प्राणा यथा यत्नं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोका:।[2]

यथाग्निस्फुलिङ्गा: अनन्ता: अग्नौ प्रतिष्ठिता: भवन्ति तथैव विज्ञानमयात्मन: प्राणा: सूर्यमण्डले कर्मसंस्कारसंयुता: प्रतिष्ठन्ति।

मूलाधारात् सहस्रारचक्रपर्यन्तं या सूक्ष्मातिसूक्ष्मा नाड्य: ता: विविधलोकान्तरेभ्य: सुसम्बद्धा:। यथा सीमान्तनाम्नी वाहकनाडी सूर्यमण्डलेन संबद्धा। यदा प्राणशक्ति: ब्रह्मरन्ध्रे गच्छति तदा वाहकनाडीनामास्थानानि नीलकमलदलानीव अनावृत्तानि भवन्ति। तदैव नाडीनां सम्बन्ध: मनसा सह लोकै: संयुक्तो भूत्वा नानाविधदिव्यज्ञानं प्रापयति।[3]

ब्रह्मरन्ध्रे अष्टकोटिनाडीनां सूक्ष्मातिसूक्ष्मव्यवहतय: भवन्ति। प्रत्येकं सूर्यस्य सहस्ररश्मिभि: संबद्धा: यथा ध्रुवमण्डलात् सुरज्ञान्ताभिधाानां नाडीनामुत्पत्ति: या: त्रिगात्नामभि: वाहकनाडीभिस्संबद्धा:। एवमेव नाडीनां योजनं ध्रुवमण्डलेनापि सञ्जात:। त्रि अञ्चति सरयतनाम्नि वाहकनाडी बृहस्पतिना संबद्धा। ताभ्य: नाडीभ्य: वयमन्यमण्डलानां विषये जानीम:।[4] यो विधौ प्राणा: तथैव मनोऽपि प्रकाशे रमन्ते अनेन लोकलोकान्तरेषु आगमनागमनं सम्पद्यते।[5] परमेतत्सर्वं सूर्यविज्ञानस्य ज्ञानेनैव सम्भवति। वायुपुराणे स्वर्लोकानामधिपति: सूर्य: कथित: स एव दिवसस्य स्वामी स्वर्लोको वै दिवम्? तत्पुराणे निश्चयमतम्।

**भूतस्याधिपतिश्चाग्निस्ततो भूतपति: स्मृत:।**[6]

---

1. तैत्तिरीयोपनिषद्–2/4/1
2. कौषीतकी–उपनिषद–4/19
3. अतीत का दिग्दर्शन पृ0 सं0 223,24(पञ्चदश पुष्प)
4. अतीत का दिग्दर्शन पृ0 सं0 223,24(पञ्चदश पुष्प)
5. अतीत का दिग्दर्शन पृ0 सं0 223,24(अष्टम पुष्प)
6. वायुपुराणम्–101/21

नैमित्तिकप्रलयकाले भूःभुवःस्वश्चैते लोकाः जनमग्नाः भवन्ति परन्तु शेषाः चत्वारः महः जनः तपः सत्यम्, तदापि स्वस्वस्थाने स्थिताः भवन्ति। तत्र सृष्टिर्विलसति नैमित्तिकप्रलयस्य प्रभावः तत्र न दृश्यते।

गायत्रीमन्त्रस्य महिमापि सूर्यविज्ञानेन सुस्पष्टो भवति। तस्मिन् निर्दिष्टाः त्रयः लोकाः भूः भुवः स्वः सन्ति। जीवः भुलोकात् स्वर्लोकपर्यन्तं बद्धस्तिष्ठति अत एव वयं सूर्योपासनां कुर्मः। तेनैव बद्धतायाः स्थितिं परित्यज्य प्राणी मुक्तिमार्गमनुगच्छति। ध्यातव्यमस्ति सूर्यस्य प्रभावक्षेत्रं भूलोकात् स्वर्गलोकं यावदेवास्ति। ततः परं लोकाः स्वप्रकाशेन प्रकाशमानाः विराजन्ते।[1]

आधुनिककाले सूर्यविज्ञानस्य ज्ञातृणां विदुषां मध्ये परमयोगी स्वामिविशुद्धानन्दः सर्वशिरोमणिः येषामनेकचमत्काराणामुल्लेखः योगिराजमहामहोपाध्यायेन गोपीनाथकविराजेन स्वकीये 'वेदों में सूर्य विज्ञान' इति नामके लेखे कृतः। तेषां प्रयोगैः सूर्यविज्ञानस्य महत्तायाः किञ्चित् व्यावहारिकस्वरूपं विज्ञायते। तां सरणिमनुगत्य साधनारताः छात्राः साधकाश्च स्वसाधनाक्षेत्रे परिष्कारान् कर्तुं शक्नुवन्ति।[2] पातञ्जलयोगप्रदीपे विभूतिपादे चतुर्दशभुवनानां ज्ञानप्रक्रियाविषये महर्षिपतञ्जलिना लिखितं यत् सूर्ये संयमनात् चतुर्दशभुवनानां ज्ञानं प्राप्यते–

**''भुवनज्ञानं सूर्ये संयमनात्''**

योगप्रक्रियायां साधकः सूर्ये स्वहृदयस्थं दिव्यं प्रकाशं संस्थाप्य प्रकृतेः रहस्यानि विज्ञाय सर्वलोकेषु निर्भयः रमते।[3]

सूर्यस्य सूक्ष्मरूपस्य महत्त्वं तु अनिर्वचनीयमेव परन्तु तस्य स्थूलरूपस्य महत्तापि विस्तीर्णा। सूर्यादेव सृष्टिः प्रभवति तेनैव विनश्यति। वर्तमानभौतिकवैज्ञानिकानामपि मान्यतास्ति यदेकस्मिन् दिवसे अन्यतारका इव रक्तदानवस्य रूपं धृत्वा समीपस्थग्रहान् भक्षयिष्यति।[4] अत एव वाल्मीकिरामायणे आदित्यहृयस्तोत्रे सूर्यस्य नामैकं मृत्युरपि पठितम्–

**आतपी मण्डली मृत्युः पिङ्गलः सर्वनाशनः॥**[5]

पृथिव्यादिग्रहेषुसृष्ट्यन्ते पिङ्गलीभूय सूर्यः सर्वेषां विनाशको भवति। सूर्यदेवस्यैतादृशमहत्त्वादेव प्रातःकाले सः ब्रह्माः मध्याह्ने शिवः अपराह्ने च विष्णुरूपः कथितः।

**उदये ब्रह्मणोपेतं मध्याह्ने तु महेश्वरम्।**
**अस्तकाले भवेद्विष्णुः त्रिमूर्तिश्च दिवाकरः॥**[6]

---

1. पौराणिकखगोल समीक्षाभाग
2. वैदिक सूर्यविज्ञान का रहस्य कन्याण(सूर्याङ्क)पृ053
3. पातञ्जलयोगप्रदीपः विभूतिपादः
4. http://en.m.wikipedia.org>wiki>Rediant
5. आदित्यहृयस्तोत्रम् वाल्मीकिरामायणम्
6. भविष्योत्तरपुराणे श्रीकृष्णर्जुन संवादे(आदित्यहृयस्तोत्रे)

सूर्यस्य किरणैः रोगाः विनश्यन्ति। ये जनाः सदैव सम्यक् सूर्य सेवन्ते ते कदापि रोगिणः न भवन्ति। सूर्यस्य रोगनाशकशक्तीः पाश्चात्त्यचिकित्सकाः अपि मन्यन्ते। सूर्याङ्के श्रीवेदप्रकाशशास्त्रीमहोदयः डा. सोलेमहोदयस्य विचारानुल्लिखति–

सूर्ये यावती रोगनाशिका शक्तिः न तावती संसारस्यान्यपदार्थेषु। कैंसरनासूरसदृशाः दुःसाध्याः ये रोगाः विकिरणचिकित्सायापि सम्यक् न तेषामपि चिकित्सा सूर्यरश्मीनां सम्यक्प्रयोगेण विहिता।[1]

अथर्ववेदेऽपि सूर्यः ओषधीनां निर्माता कथितः–

**अपचितः प्र पतत सुपर्णो वसतेरिव।**
**सूर्यः कृणोतु भेषजं चन्द्रमा वोऽपोच्छतु।।[2]**

सूर्यस्य रश्मयः"विटामिन डी" इत्यस्य प्रमुखस्रोतांसि। सूर्यरश्मिसेवनेन त्वग्रोगााः शम्यन्ते लौहतत्त्वस्य पूर्तिः भवति, अस्थीनि सुदृढानि भवन्ति। सूर्यचिकित्सासिद्धान्तानुसारेण रोगाणां मूलकारणं शरीरे सप्तवर्णानां सन्तुलनं वर्तते। अस्माकं शरीरे यादृशां रासायनिकतत्वानामाधिक्यं भवति तथैव शरीरस्य तस्याङ्गस्य वा वर्णो भवति। वर्णविपरिवर्तनेऽपि तदेव कारणम्। यतोहि सूर्यरश्मिषु सप्तवर्णाः सम्पूर्णाः भवन्ति अतः तस्य प्रयोगेण रोगचिकित्सा सम्भवति। विविधवर्णानां जलकूपीषु जलं भूत्वा तत्सूर्यकिरणेषु तप्यते। सूर्यकिरणानां सत्त्वं तद्वद्वर्णजलकूपिभिरवशोष्यते। एवमेव यद्यपि जलस्य वर्ण समानमेव तिष्ठति तथापि तज्जलं सूर्यकिरणप्रभावेण विविधरोगाणां औषधिरूपेण सञ्जायते। तस्य पानेन न्यूनतत्त्वानां वृद्धिर्भूत्वा जनान् नीरोगान् करोति।

एषा चिकित्सापद्धतिः वर्णचिकित्सेति नाम्ना प्रसिद्धा।[3] महर्षिचरकोऽपि सूर्यचिकित्सायाः प्रयोगं करोति स्म।[4] सुश्रुतसंहितायामपि वर्णचिकित्सायाः वर्णनं प्राप्यते। अथर्ववेदेऽपि सूर्यस्य रक्तवर्णेन पाण्डुरोगस्य चिकित्साविषये उल्लिखितम्।–

**अनु सूर्यमुदयतां हृद्द्योतो हरिमा च ते।**
**गो रोहितस्य वर्णेन तेन त्वा परिदध्मसि।।[5]**

न केवलं रोगा अपितु रोगनाशकाः कृमयोऽपि सूर्यरश्मिभिः समाप्यन्ते। अथर्ववेदे एव स्पष्टतयोल्लिखितम्–

**उद्यन्नादित्यः क्रिमीन् हन्तु निम्रोचन् हन्तु रश्मिभिः।**
**ये अन्तः क्रिमयो गवि।।[6]**

1. कल्याण, सूर्याङ्क–पृष्ठ–259
2. अथर्ववेद–6/83/1
3. सूर्याङ्क पृ0 260 सूर्य और आरोग्य डॉ0 वेदप्रकाश शास्त्री
4. चरक संहिता अध्याय–3
5. अथर्ववेद–1/22
6. अथर्ववेद–2/32/1

अर्थात् पृथिव्यां ये ये रोगोत्पादकाः सूक्ष्मकृमयः वर्तन्ते ते आदित्यस्य प्रकाशेन विनश्यन्तु।

एवंप्रकारेण सूर्यः विविधरहस्यानां आकरः पृथिव्याः जीवनं प्राणिनां पोषकः सृष्टेः नियामकश्चास्ति। अस्य सूक्ष्मरूपस्य विज्ञानेन विविधाः चमत्कारिकाः दैशक्तयः प्राप्यन्ते तथैव स्थूलरूपस्य ज्ञानेन भौतिकी समृद्धिः सुखानि आरोग्यं च प्राप्यन्ते। अत एवोल्लिखितम्–

**आरोग्यं भास्करादिच्छेन्मोक्षमिच्छेज्जनार्दनात्॥**[1]

1. सूर्याङ्क पृ0 262

# प्रो. राजेन्द्र मिश्र कृत शतककाव्यों में सामाजिक चेतना

**डॉ. भूपेन्द्र कुमार राठौर**

अर्वाचीन संस्कृत काव्य की सतत् प्रवाहमान धारा को गौरवमयी पारम्परिकता, विडम्बनापूर्ण वर्तमान और भविष्यगत सम्भावनाओं से जोड़ने वाले कवि, नाटककार, कथाकार, साहित्य समीक्षक और शास्त्रवेत्ता त्रिवेणी कवि प्रो. अभिराज राजेन्द्र मिश्र का अपना विशिष्ट स्थान है। उनकी बहुश्रुत, बहुविध प्रतिभा का लोहा सम्पूर्ण संस्कृत जगत् मानता है। उनकी रचनाधर्मिता के विषय में **डॉ. राधावल्लभ त्रिपाठी** लिखते हैं कि– ''राजेन्द्र जी का ललित वाङ्मय आज की संस्कृत रचनाधर्मिता की विविध प्रवृत्तियों का सबसे समृद्ध समागम प्रस्तुत करता है।[1]'' आज संस्कृत के दृश्यपट पर जितने रचनाकार सक्रिय हैं, उनमें राजेन्द्र जी का 'कैनवास' सबसे अधिक विस्तृत और बहु–आयामी है– इसमें कोई संदेह नहीं। प्रवृत्तियों की दृष्टि से देखें तो उनके साहित्य में स्वच्छन्दतावाद या रूमानियत, यथार्थवाद, समाजवाद, आधुनिकतावाद तथा परम्परावाद ये पाँचों प्रवृत्तियाँ यथास्थान अंतर्गुम्फित हैं। ये पाँचों प्रवृत्तियाँ भी एक दूसरे से विच्छिन्न होकर या एकांकी रूप में उनकी रचनाओं में समाविष्ट नहीं होती। उनकी रचनायात्रा के एक दौर में स्वच्छंदतावादी या रूमान से भी रचनाओं की भरमार है, पर ये रचनाएँ आधुनिक भावबोध, पारम्परिक काव्यदृष्टि की समझ और यथार्थ तथा आधुनिकता से भी सहकृत है। उनकी आधुनिक जीवन पर लिखी कहानियों व राजनीतिक कविताओं तथा गीतों में समाजवादी विचारधारा विशेष रूप से प्रतिफलित हुई है। सौन्दर्यदृष्टि और जनजीवन के प्रति संवेदना इन पाँचों स्तरों पर निरंतर अव्याहत बनी रही है।[2]''

**प्रो. राजेन्द्र मिश्र** कृत 'अभिराजसहस्रकम्' में संकलित 10 शतक–काव्यों में जीवन व जगत् के विविध आयामों को प्रस्तुत किया है। उपर्युक्त पाँचों प्रवृत्तियों के आधार पर उनके शतककाव्यों में कहीं स्वच्छंदतावाद है तो कहीं रूमानियत तो कहीं यथार्थवाद व आधुनिकता का पुट है तो कहीं कवि बिल्कुल परम्परा के मुहाने पर खड़ा नज़र आता है। आज की संस्कृत कविता में युगपरिवर्तन की झलक साफ दिखायी दे रही है। **डॉ. रमाकान्त पाण्डेय** के शब्दों में – ''आज

---

1. अभिराज राजेन्द्र मिश्र का 'अंदाज–ए–बयां और' डॉ. राधावल्लभ त्रिपाठी, पृ. –6–7,दृक् अंक 6।
2. अभिनवकाव्यालंकारसूत्रम्/संस्कृत काव्य शास्त्र का अभिनव आयाम,पृ.–99 दृक् XIII.

का साहित्य राजसी वैभव के पटल से उतरकर जनसामान्य की भावनाओं को अंगीकृत कर चुका है और उसमें आ रहे पात्र भी पूर्णतः परिवर्तित हो चुके हैं। कुल मिलाकर आज का साहित्य लोकजीवन की समग्र परिधि के चारों ओर घूमता नज़र आता है।''

युग परिवर्तन के इस दौर में सभी काव्य प्रवृत्तियाँ परिवर्तित दिखायी दे रही है। इन परिवर्तित प्रवृत्तियों को देखते हुए आज काव्यशास्त्रियों ने काव्य को नवीन प्रकार से परिभाषित किया है। प्रो. राधावल्लभ त्रिपाठी के अनुसार –**लोकानुकीर्तनं काव्यम्।।** अभिनव ।। अर्थात् लोक का अनुकीर्तन ही काव्य है। डॉ. त्रिपाठी ने आधिभौतिक, आधिदैविक एवं आध्यात्मिक तीनों प्रकार के लोको में जीवन व जगत् से सम्पूर्ण तत्त्वों को आत्मसात् कर लिया है। अतः प्रो. अभिराज राजेन्द्र मिश्र के शतक-काव्यों का समग्र दृष्टि से आलोडन-विलोडन करने पर उनके इन शतक-काव्यों में भारतीय जीवन दृष्टि के राजनैतिक, सामाजिक, सांस्कृति सभी पक्ष उभर कर सामने आ जाते हैं। कवि अपनी प्राचीन भारतीय परम्पराओं, गौरवपूर्ण अतीत, ऐतिहासिक परिप्रेक्ष्यों और तत्कालीन जीवन दर्शन का तो साक्षात् कराता है, सम-सामयिक घटनाक्रमों और वर्तमान जीवन की वर्तमान में स्थिति को लेकर कवि अत्यधिक व्यथित है। माँ भारती के प्रति समर्पित कवि की यह पीड़ा उचित भी है अतः कवि का लेखन कर्म जीवन के समग्र पहलुओं को तो दर्शाता है और साथ ही संस्कृत के प्रचार-प्रसार के प्रति भी सन्नद्ध है।

## सामाजिक सन्देश

साहित्य समाज का दर्पण होता है, कवि जिस समाज में जीता है, सांस लेता है उसका प्रतिबिम्ब उसके काव्य में अवश्य उभर कर आता है। हालांकि **प्रो. अभिराज राजेन्द्र मिश्र** कृत 'अभिराजसहस्रकम्' शतककाव्य संकलन के अधिकतर शतक भारतीय संस्कृति के प्राचीन गौरवगान पर आधारित है।[1] उनमें प्राचीन भारत की संस्कृति, मूल्यों, मान्यताओं, आध्यात्मिक व धार्मिक जीवन दर्शन और भारत का प्राकृतिक सौन्दर्य वर्णित है लेकिन इन सबके बीच झांक जाता है कवि का युगबोध। उसकी लेखनी की पैनी धार से वर्तमान जीवन का यथार्थ अछूता नहीं रह सकता। यही कारण है कि प्राचीन गौरवगान के बीच भारत की वर्तमान दशा के प्रति संवेदना, शिक्षा का अवमूल्यन, आतंकवाद और वर्तमान राजनीति के पहलू तो उभरे ही है साथ ही 'विस्मयशतकम्' जैसा शतककाव्य जो वर्तमान भारत की अनेकानेक समस्याओं की ओर इंगित करता है, जिसमें आज के भारतीय समाज में परम्पराओं का ह्रास, नारी की दयनीय व असम्मान जनक स्थितियाँ, वर्णसंघर्ष, दारिद्र्य, अशिक्षा आदि समाज की अनेक समस्याओं का वर्णन है। 'विस्मयशतक' का एक-एक पद्य विस्मित व विडम्बित ही नहीं करता वरन् पाठक के समक्ष व्यवस्थाओं पर अनेकों प्रश्नचिह्न भी लगाता है।

---

1. संस्कृत लोक-कथा में लोकजीवन, डॉ. गोपाल शर्मा, पृ.-8, हंसा प्रकाशन, जयपुर ।

## वर्तमान समाज में व्याप्त विसंगतियाँ

आज भारतीय समाज में सर्वत्र विसंगतियाँ व्याप्त है। इस बात को कवि ने तोते व कौअे के दृष्टान्त द्वारा प्रस्तुत किया है। मधुर स्वर वाला तोता पिंजरे में भूखा व विपन्नावस्था में है और कौआ किशमिश का आस्वादन करता है। इसी प्रकार गाय को पर्याप्त भोजन नहीं दिया जाता और कुत्तों को प्रयत्नपूर्वक खिलाया जाता है। हिन्दी के प्रसिद्ध कवि डॉ. रामधारी सिंह की पंक्तियाँ हैं कि 'श्वानों को मिलता दूध, भूखे बालक अकुलाते हैं' इसी प्रकार के भाव को कवि ने निम्न कविता में व्यक्त किया है –

**अक्षीरिणी धेनुरितीव मत्वा, न भूरिभक्ष्यं प्रददाति तस्यै।**
**श्वानं जनो भोजयते सयत्नं, दृष्ट्वेति मे विस्मयमेति चित्तम्॥**[1]

समाज में दारिद्र्य, बेकारी और असन्तुलित विभाजन व सदस्यता के अभाव में विडम्बनापूर्ण स्थितियाँ दिखायी देती है। तथाकथित समाज का सम्पन्न वर्ग, जिसका भिक्षु को देखकर मन द्रवित नहीं होता ; किन्तु बिलाव को पुत्र के समान पालता है आदि दृश्य कवि के मन में विस्मित करते हैं –

**न दीर्यते हन्त शिलाकठोरं, विलोक्य भिक्षुं हृदयं यदीयम्।**
**स एव पुत्री कुरूते विडालं, दृष्ट्वेति मे विस्मयमेति चित्तम्॥**[2]

समाज में गुणहीनों की प्रतिष्ठा है तथा योग्यता का अपमान हो रहा है। हिन्दी कवि बिहारी के दोहे के भाव 'अब दादुर वक्ता भये हमो पूछत कौन' को कवि ने एक पद्य में प्रस्तुत किया है। इसी प्रकार कीचड़ में कमल की स्थिति और नागफनी (कैक्टस) को घर में देखकर कवि गुणवानों के अपमान व गुणहीनों के सम्मान का प्रतीक माना है। संसार में इस प्रकार की परस्पर विरोधी स्थितियों को देखकर कवि विडम्बित है –

**वराहयूथोन्मथिते नु पंके, भान्ति स्वयम्भूनि सरोरूहाणि।**
**प्रतिष्ठता नागफणं च गेहे, दृष्ट्वेति मे विस्मयमेति चित्तम्॥**[3]

## संस्कृति का अवमूल्यन

आज भारतीय संस्कृति का ह्रास हो रहा है संस्कार, शिष्टाचार, आचार–विचार सबका पतन देखकर कवि अपनी प्राचीन गौरवमयी संस्कृति को कैसे भूल सकता है ? पतन की यह दशा कहाँ जाकर ठहरेगी ? कुछ कहना मुश्किल है –

---

1. विस्मय. 2
2. विस्मय. 3
3. विस्मय. 5

**क्व यास्तीयं तटिनी प्लवोत्था, संस्कारसद्वृत्तटंकषोग्रा।**
**क्व संस्कृतिः संगमनी वसूनां, दृष्ट्वेति मे विस्मयमेति चित्तम्॥**[1]

डॉ. अर्चना जोशी के अनुसार ''आज चलचित्र से उपजी नव संस्कृति ने समाज को सर्वाधिक हानि पहुँचायी है। चलचित्र की इस नवीन संस्कृति में शिष्टाचार का पालन नहीं है, मर्यादा का कोई स्थान नहीं है। चलचित्र, दूरदर्शन के जुगुप्सित, विगर्हित और अमर्यादित प्रदर्शनों के पीछे मात्र धन-प्राप्ति की लालसा है।''[2]

**गुह्यातिगुह्यानि जुगुप्सितानि, वृत्तान्यवाच्यानि विगर्हितानि।**
**स्वैरं प्रदर्श्यन्त इहाधिन्त्रं, दृष्ट्वेति मे विस्मयमेति चित्तम्॥**[3]

**स्फुटान्यमर्यादितचुम्बनानि, गढोपगूढानि रतिक्रियाश्च।**
**प्रदर्श्यते सर्वमहोऽर्थलुब्धैः, दृष्ट्वेति मे विस्मयमेति चित्तम्॥**[4]

यह सम्पूर्ण संस्कृति हमारे समाज को चलचित्रों द्वारा दी गयी हैं। दूरदर्शन पर गर्भनिरोधक दवाईयों का प्रसारण पिता-पुत्री व भाई-बहनों के साथ बैठकर मदिरा पान, जो गोपनीय पुरुषों से छिपाने वाले स्त्रियों के इतिवृत्तों का पुरुषों के द्वारा सुनना व देखना, नग्न रतिक्रीडा के चित्र कुमारी युवतियों द्वारा देखना रजःस्राव विधि रोधक उपायों को बार-बार बड़ों के सामने दिखाना आदि अधःपतन व अति यथार्थ के नग्न चित्रों को प्रस्तुत कर कवि भारत की आज की विपन्नावस्था पर आँसू बहा रहा है। भारतीय प्राचीन आर्ष संस्कृति आज पतन के गर्त में गिर रही है लेकिन कोई विद्वान् शास्त्रवेत्ता उसे रोकने में समर्थ नहीं है।

**श्वभ्रे पतन्ती ननु भारतीया, न वार्यते संस्कृतिरार्षमूला।**
**केनापि विज्ञेन बुधेन शास्त्रा-दृष्ट्वेति मे विस्मयमेति चित्तम्॥**[5]

आज शाश्वत जीवन मूल्यों-सत्य त्याग, स्वाध्याय के प्रति कोई आग्रह नहीं रखता। शिष्टाचार, आध्यात्मिकता, लोकैषणा और ज्ञानतृष्णा से रहित समाज में मात्र धनलिप्सा शेष है। भोगपरा संस्कृति के विस्तार के बीच अध्यात्मप्रधान त्यागपरा संस्कृति विलीन हो गयी है।

**औद्दालकिर्यत्र यमं जगाद तवैव वाहास्तव नृत्यगीते।**
**तत्रार्थलिप्सोद्धतनग्ननृत्यां, दृष्ट्वेति मे विस्मयमेति चित्तम्॥**[6]

---

1. विस्मय. 25
2. अर्वाचीन संस्कृत कविता में जीवन दर्शन, पृ.-13।
3. विस्मय. 11
4. विस्मय. 12
5. विस्मय. 27
6. विस्मय. 80

इस प्रकार समाज व संस्कृति पूर्णतः पतन की ओर अग्रसर है। समाज में सर्वत्र भ्रष्ट तंत्र है। घूस लेते न्यायाधीश, झूठ बोलते वकील और छात्रों को छलते शिक्षक यह सब विपर्यास देखकर लगता है कि हमारी त्यागपरा संस्कृति भोगपरा कैसे हो गयी ?

**सा संस्कृतिस्त्यागपरा पुराणी, जाता कथं भोगपराऽस्मदीया?**
**वनीयकं विश्वगुरूं दिशन्ती, दृष्ट्वेति मे विस्मयमेति चित्तम्॥**[1]

**धर्मान्धता या धार्मिक विद्वेष**

'धारामाण्डवीयम्' में भोजराजा की धारानगरी मुगलों की धर्मान्धता के कारण नष्ट हो गयी। इसी प्रकार 'वैशालीशतकम्' में नालन्दा जैसे विश्वविद्यालय खिलजी व बख्तियार मुगल शासकों द्वारा जला दिये गये, जिनकी आग महीनों तक जलती रही थी। जाति, द्रोह की ज्वाला में जलकर भारत एक बार पुनः अंग्रेजों के अधीन होकर अपने प्राचीन वैभव को भूल चुका था। स्वतंत्रता प्राप्ति के पश्चात् भी परस्पर विद्वैष व द्रोह का यह क्रम थमा नहीं। हमारी संस्कृति जो नित्य विश्वबन्धुत्व की आकांक्षिणी रही है वह आज अपने ही घर में अपने भाईयों के विद्रोह के कारण छली गयी है जो विश्वशान्ति के प्रयासों में स्वयं रत रही है वह आज अपने कुटिम्बियों के द्वारा किये गये कलह के अशांत है। भारत माता स्वयं अपनी वेदना प्रकट करती है कि -

**याऽहं बहुमता नित्यं विश्वबन्धुत्वकाङ्क्षिणी।**
**स्वीयवेश्मनि साऽद्याऽहं बन्धुद्रोहैः खलीक्रिये॥**

**विश्वशान्तिप्रयासेषु याऽहमासं महीयसी।**
**अशान्ता स्वयमद्याहं कलहैः स्वकुटुम्बिनाम्॥**[2]

आज समाज में कुछ लोग अपने सीमित स्वार्थों के लिए हिन्दू व मुसलमानों के बीच विद्वेष पैदा कर रहे है। ये स्वार्थी लोग देश में अलगाव के लिए रत है। यथा -

**न कोऽपि सभ्यग्यतते समेषां, सस्नेहमेकीकरणाय धुर्यः।**
**सर्वे पृथक्त्वाय समिद्धवीर्या, दृष्ट्वेति मे विस्मयमेति चित्तम्॥**[3]

आज जो स्थितियाँ हैं उसके लिये कट्टरता जिम्मेदार है। भारत में रहकर भी जो राम से विद्वेष करते हैं, गीता को नहीं मानते हैं और वेदत्रयी के प्रति श्रद्धा धारण न करने वालों को भारत का अन्न खाने का अधिकार नहीं है। मुसलमानों को धर्मान्धता और उनके द्वारा मन्दिरों का ध्वंस भारतभूमि के भक्तों के द्वारा सहन नहीं किया जायेगा, कवि ने यह कड़ी चेतावनी भी दी है। कवि

1. विस्मय. 83 ॥
2. भारती. 73-74 ॥
3. विस्मय. 36 ॥

ऐसे मदान्ध लोगों को न हिन्दू मानता है न मुसलमान। ऐसे लोगों की गणना संस्कृति पंजिका में नहीं की जा सकती। ये वस्तुत: पृथिवी पर कलंक है -

**एवंविधानां गणना न कार्या, दुरात्मनां संस्कृतिपंजिकायाम्।**
**कलंकभूताः खलु ते पृथिव्या, दृष्ट्वेति मे विस्मयमेति चित्तम्।।**[1]

भारतीय समाज में तो हिन्दू-मुसलमान में चिरकाल से भाईचारा रहा है। कभी पुराना ऐतिहासिक वैषम्य रहा होगा लेकिन सम्पूर्ण स्वतंत्रता संग्राम हिन्दू मुसलमानों ने मिलकर लड़ा है। रसखान, रहीम, दाराशिकोह जैसे सच्चे मुसलमान भारत के गौरव रहे हैं। अत: कवि के अनुसार-

**हिन्दवो मुस्लिमाः सन्ति चिरकालाद्धि भारते।**
**भ्रातृकल्पा मिथो बद्धा रागबन्धवशीकृताः।।**[2]

**स्वाधीनतां समावाप्तुं यत्नवन्तौ बभूवतुः।**
**समवायावुभावेव कात्र कार्या विचारणा।।**[3]

आज भी हमारी स्वतंत्रता को कायम रखने के लिए कार्गिल में अनेकों मुसलमान सैनिक शहीद हुये हैं। जाकिर हुसैन, अब्दुल कलाम नैष्ठिक भारतीय हैं अत: हमें ऐसी धर्मान्ध ताकतों का पुरजोर विरोध कर देश की एकता को बनाये रखना चाहिये।

### समाज में नारी की स्थिति

प्राचीन भारतीय समाज में नारी माँ, पत्नी व बेटी के रूप में सम्मान की अधिकारिणी रही है। समाज में नारी व पुरुष की समान भागीदारी है, एक की स्थिति कमतर होने पर हम स्वस्थ समाज की कल्पना नहीं कर सकते। परस्पर भेद भुलाकर मंगलदाम्पत्य हमारे गृहस्थ धर्म का आदर्श रहा है। अत: यक्ष कहता है -

**इतः वरं मानिनि! ते पृथक्त्वं सम्बाधतेऽद्वैतविधानकं तत्।**
**जायापतिर्यत्र विहाय भेदं समाप्नुतो मंगलदाम्पतीत्वम्।।**[4]

'अभिराजसहस्रकम्' के सम्पूर्ण शतक में भारतीय संस्कृति के अतीत का गौरव व वर्तमान राष्ट्र की विपन्नावस्था के चित्र ही अधिक है परन्तु बीच-बीच में समाज व मानवीय स्वभाव का स्पर्श भी दिखायी दे जाता है। यक्ष का शापवशात् अपनी पत्नी से पृथक् रहने पर वह जानता है कि पड़ोस की औरतें उसकों अभिलक्षित कर अवश्य कुछ ऊँची नीची बातें कहती होगी क्योंकि नारियों का स्वभाव है कि वे दूसरों के विषय में या निन्दा में रस लेती है। यथा-

1. विस्मय. 62
2. पाक. 53
3. पाक. 55
4. प्रबोध. 100

**जानाम्यहं यत्प्रतिवेशनार्यो निन्दारसा मामभिलक्ष्य तुभ्यम्।**
**वक्ष्यन्ति निम्नोन्नतमेव नित्यं योषिन्निसर्गो हि परोपजातः॥[1]**

भारतीय समाज में लज्जा, शील व चरित्र नारी का गहना माना जाता था ; किन्तु आज दूरदर्शन व चलचित्रों के नारी की छवि बिल्कुल विपरित दिखायी देती है। आज अभिनेत्रियों ने अपने आचरण के द्वारा वेश्याओं को भी तिरस्कृत कर दिया है। दूरदर्शन पर नग्न रतिक्रिया के चित्र, अमर्यादित चुम्बन भारतीय नारी की वर्तमान उच्छृंखल छवि की ओर इंगित करते हैं। नारियों के विषय में गोपनीय बातों को सबके सामने प्रकट करना, अतः स्त्रियोचित शीलरक्षा कैसे संभव है? यह देखकर कवि विडम्बित है। यथा –

**क्व गोपनं सम्प्रति भावनानां, स्त्रियोचितानां क्व च शीलरक्षा?**
**सर्वं विपन्नं नवसंस्कृतौ तद्, दृष्ट्वेति मे विस्मयमेति चित्तम्॥[2]**

आज लम्पट व स्त्रीजनों के शील का भक्षण करने वाले है वही उनकी पालकी ढो रहे हैं ऐसे में वधुओं की कुशलता कैसे संभव है ?

**ये लम्पटाः स्त्रीजनशीलभक्षा-स्त एव हा तच्छिविकां वहन्ति।**
**क्व सम्भवं तत्कुशलं वधूट्या, दृष्ट्वेति मे विस्मयमेति चित्तम्॥[3]**

'विस्मयशतकम्' में कवि ने भारत की वर्तमान विपन्नावस्था पर विडम्बना व विस्मय व्यक्त किया है अतः उसमें नारी के विषय में भी समाज की उच्छृंखलन स्थितियों व समाज के ह्रास व अवमूल्यन के चित्र है। कहीं–कहीं तो कवि अत्यन्त संवेदनशील व भावुक हो गया है और उन्होंने समाज की नग्नावस्था व अति यथार्थ के विभत्स चित्र प्रस्तुत किये हैं।

**लोकजीवन**

'लोकानुकीर्तनं काव्यम्' की आधुनिक परिभाषा के अन्तर्गत तो उपर्युक्त वर्णित आध्यात्मिक आधिभौतिक आधिदैविक सम्पूर्ण लोक आ जाता है लेकिन काव्यों में गाँव गिराव की संस्कृति व गाँवों में बसते भारत के चित्र लोकजीवन के कोटि में अधिक आते हैं। आधुनिक पश्चिमी विद्वानों तथा उनके कर्त्ता कई भारतीय आलोचकों ने 'लोक' शब्द का अर्थ निरक्षर/अर्धशिक्षित/ग्रामीण जनता/अनार्य संस्कारों से युक्त/आदिवासी/जनजाति आदि मानते हैं। हजारी प्रसाद द्विवेदी के अनुसार लोक शब्द का अर्थ जनपद या ग्राम्य नहीं है वरन् नगरों व गाँवों में फैली वह सम्पूर्ण जनता है, जिसके व्यावहारिक ज्ञान का आधार पोथियाँ नहीं हैं। डॉ. गोपाल शर्मा के अनुसार 'लोक' वह है जो ग्राम हो या नगर, कहीं भी रहता हो, साक्षर हो या निरक्षर, किसी भी जाति अथवा धर्म का हो, परिस्थितियों व अभावों के कारण समाज का एक ऐसा वर्ग जो सम्मान व शक्ति की दृष्टि से सामाजिक, आर्थिक, राजनैतिक एवं धार्मिक जीवन में तथाकथित उच्च सभ्य व सुशिक्षित वर्ग की

1. प्रबोध 70
2. विस्मय. 24
3. विस्मय. 43

दृष्टि से उपेक्षित है एवं निम्न है या उनके शोषण का शिकार है, फिर भी जीवन में उस देश की पुनीत संस्कृति का जीवन्त रूप झलकता है।

वैशाली की धरती का वर्णन करते हुए कवि ने वहाँ का लोकजीवन पूर्णतः चित्रित कर दिया है। गाँव के किसानों की स्त्रियों के द्वारा धान रोपने और निरन्तर बातें करने तथा भूमि का श्रृंगार करने के कुछ चित्र लेखक के दृष्टिपथ में आये, उनका वर्णन देखिये –

**क्वचिज्जलाविले क्षेत्रे गुल्फदघ्ने सविभ्रमम्।**
**व्रीहिरोहान् रोपयन्त्यो ग्रामश्रमिकयोषितः॥[1]**

**नैशविश्रम्भवार्ताभी रंजयन्त्यः परस्परम्।**
**कुर्वत्यो भूमिश्रृंगारं मल्लोचनपथं ययुः॥[2]**

पशुओं को चराते और भैंस की पीठ पर बैठे ग्रामीण बच्चे और कान में अंगुली दिये तेज आवाज में गाते गाँव के कुल क्रमागत गीतों को गाते गाँव के बालकों के झुण्ड हाथ में लाठी और लंगोटी पहने तो आनन्द में मग्न मन में कौतूहल धारण किये ग्राम वासियों का वर्णन कर भारत के गाँवों का साक्षात् चित्र हमारे सामने प्रस्तुत कर दिया है –

**क्वचिच्च समजं प्राज्यं चारयन्तस्सकौतुकम्।**
**महिषीपृष्ठसंरूढा ग्रामपामरदारकाः॥**

**तांस्तान्ननु ग्रामरागान् स्वैरकुलक्रमागतान्।**
**निविष्टकर्णांगुलयश्चालपन्तो मुहुर्मुहुः॥**

**कौपीनवृत्तमध्यांगा हस्तोल्लासितयष्टिकाः।**
**आनन्दतटिनीमग्ना मानसे कुतुकं दधुः॥[3]**

पृथिवी विविध धानों ज्वार, बाजरा, तिलों से भरी हुई और विभूषित थी। इसी प्रकार का वर्णन बाली द्वीप प्रवास के दौरान लिखी गयी उनकी कविता 'अयि मम भारतभूमे' में भी दिखायी देती हैं। ''कवि की स्मृति में कौंध उठता है गाँव-गिराव की संस्कृति में समरस अपना भारत! गाँव के वे लहलहाते खेत जहाँ गाँव के अधनंगे बच्चे मचान पर खडे, सीटियाँ बजाते चिड़ियों से फसल की रखवाली कर रहे होते हैं। बंसवारी में चहचहाते विहगों से जहाँ सवेरा होता है और विन्ध्य की उपत्यकता में उतरा बसन्त जहाँ, महुवे की मादक गंध से बौराई पुलिन्दसुन्दरियों के ठुमकों से सार्थक हो उठता है। बालीद्वीप में बैठे प्रवासी कवि (अभिराज राजेन्द्र) को 'काबुलीवाले' की तरह अपने वतन की याद आती है और वह प्रेम में मग्न गाता है शैशवाभ्यस्त, परम्पराओं में पला अपना ग्रामांचल।''[4]

---

1. वैशाली. 18 ॥
2. वैशाली. 19॥
3. वैशाली 20-22 ॥
4. गुर्जर. 83-84

लोक कला व संस्कृति में गुजरात का भी अपना विशेष स्थान है अतः 'गुर्जरशतकम्' में कवि ने गुजरात की लोक कलाओं व लोकनृत्यों का वर्णन किया है। गुजरात प्रदेश में 'गुर्जरी' जो सुन्दर, रूपगर्विता गणिका अथवा उत्तर में नववधू के लिए प्रयोग किया जाता है। 'गुर्जरी' के नाम से पूरे भारत में गुजरात की कला व संस्कृति के एम्पोरियम् हर जगह है।

**प्रदेशस्यास्य नारीणां रूपसीम्नैव वस्तुतः।**
**गुर्जरी-पदवाच्याऽभूदौदीच्येषु नवा वधूः॥**

**सावगुण्ठां क्वच्चिापि गणिकां रूपगर्विताम्।**
**गुर्जरीं गुर्जरिकां वा जनाः शंसन्ति सादरम्॥**[1]

गुजरात, विशेषकर लाट भारत में नृत्यप्रियता के लिए प्रसिद्ध है। गुजरात के प्रसिद्ध रास 'दाण्डिक' व नृत्यों 'गरबा' व भवाई का वर्णन कवि ने इस प्रकार किया है -

**कलानृत्यप्रिया लाटाः ख्याता नूनं हि भारते।**
**आलोक्य दाण्डिकं रासं कः प्रमाणमपेक्षते॥**

**गर्बेति वर्तुलाकारे नृत्यरत्ने प्रवर्तिते।**
**युवा को न भवेत्कृष्णो युवती का न राधिका॥**

**भवाईति समाख्यातं नृत्यमन्यदपि ध्रुवम्।**
**प्रसह्य परिबध्नाति वागुरेव मनोमृगम्॥**[2]

गुजरात का दाण्डिक रास, गरबा व भवई नृत्य तो गुजरात नहीं पूरे भारत में प्रसिद्ध है। आजकल नवरात्रों में तो 'गरबा' की धूम रहती है। गंगा के मधुरगीत सुनकर तो आँसुओं की धारा बह निकलती है तो जलाराम की उदात्त वाणी को सुनकर अपने भारत के उत्पन्न होने पर गर्व होता है।

'धारामाण्डवीयम्' सैनिकों द्वारा जूसताख (युग्मायुग्मं) लुकाछिपि खेलना, पहेलियाँ बुझाना आदि का वर्णन वहाँ की लोक क्रीडाओं को दर्शाता है -

**चिक्रीडुस्सावकाशा नरपतिपृतनासैनिका यत्र नित्यं**
**युग्मायुग्मं प्रहेलीं रूचिकरमथ कूकूरतं कन्दुकं वा।**
**अन्विष्यन्तिस्म केचित्प्रवरसहृदया गूढपादं चतुर्थं**
**केचिच्चाख्यानदक्षा रघुपतिकथया रंजयामासुरंगान्॥**

प्रबोधशतकम् में यक्ष के प्रवास में होने पर प्रोषितभर्तृका यक्षिणी को पड़ौसिनों की अनेक ऊँची नीची बातें सुननी पड़ती होगी, ये सभी वर्णन सिद्ध करते हैं कि डॉ. अभिराज राजेन्द्र मिश्र लोक संस्कृति की वर्णना में निपुण कवि है। वे स्वयं भारत के ग्रामीण अंचल में पले-बढ़े हैं अतः ग्राम संस्कृति का वर्णन उन्होंने बखूबी किया है। उनके अन्य काव्यों में संस्कृत में लोकगीतों, का प्रयोग उनके नाटकों में हास्य व्यंग्य के रूप में लोक का बहुत ही सुन्दर चित्रण दिखायी देता है।

1. गुर्जर 85-87
2. धारा. 64

